दीनानाथजनान् विलोक्य हृदये दुःखाग्निदग्धान् वहन्
कारुण्यामृतभासुरं परिलसद्दानेन पीनेन वै ।
रक्ष रक्षमतीव याति न हि यस्तृप्तिं परां चेतसि
श्रीरायक्षितिनायकः स भुवने कारुण्यवीरो भवेत् ॥ ९२ ॥
यं दृष्ट्वा प्रलयान्तभैरवमिमं दोर्दण्डचण्डं नृपं
वैरिक्ष्मापगणा भयज्वरमिता धावन्ति मूर्च्छन्ति च ।
नीरं यान्ति तरुं श्रयन्ति तृणकं चुम्बन्ति वल्मीककं
चारोहन्ति स रायवङ्गनृपतिः संग्रामवीरो भुवि ॥ ९३ ॥
भयाख्यस्थायिभावोऽत्र व्यक्तो भावचतुष्टयात् ।
भयानकरसस्तस्यालम्बभावः प्ररूपितः ॥ ९४ ॥
निर्घातव्याघ्रसर्पारिभल्लूकेभहरिव्रजः ।
उद्दीपनो[1] घनस्तस्य गर्जनादिः प्रकीर्तितः ॥ ९५ ॥
अनुभावोऽत्र वैवर्ण्यस्वेदकम्पादिको मतः ।
स एव सात्त्विको भावः संचारी तु प्रकीर्त्यते ॥ ९६ ॥
सम्भ्रमत्राससंमोहोरुदीनभावादिभेदभाक् ।
एते चतुर्विधा भावा योज्याः काव्यविशारदैः ॥ ९७ ॥
युद्धे रायनरेन्द्रहस्तकलितं खड्गोरुकालोरगं
दृष्ट्वा भीतिवशाद्विपक्षधरणीनाथाः प्रकम्पं गताः ।
धावन्तो गिरिगह्वरास्थितमहाघोरान्धकारं श्रिता-
स्तास्तत्रापि भयं नयन्ति वनिता दिव्याङ्गसत्कान्तयः ॥ ९८ ॥
जुगुप्सास्थायिभावोऽयं व्यक्तो बीभत्सनामकः ।
रसो जुगुप्स्यवैराग्यहेतुजन्मा द्विधा मतः ॥ ९९ ॥
आलम्बनविभावोऽत्र जुगुप्स्योऽर्थो मनःप्रियः ।
उद्दीपनस्तु दुर्गन्धदुष्टदोषादिको मतः ॥ १०० ॥

---

१ उद्दीपनं हनं० ।

अनुभावोऽस्य वक्त्रस्य नासिकायाश्च कूणनम् ।
वेगप्रभृतिक चोक्त पुलकादिस्तु सात्त्विक: ॥ १०१ ॥
निर्वेगोद्वेगकोपादि सचारी परिकीर्त्यते ।
इति भावचतुष्क तु योज्य सत्कविकुञ्जरै ॥ १०२ ॥
श्रीरायक्षितिपेन घोरसमरे जित्वा विनि कासिता
देशाद् वैरिनृपा निजेष्टरमणीयुक्ताश्चरन्तोऽनिशम्
सर्वाङ्गव्रणपूयजर्जरितकाष्टाङ्गा जुगुप्स्या जना-
वर्तन्तेऽ गतिका दरिद्रमनुजा भिक्षाटने तत्परा ॥१०
श्रीरायवगभूपतिनिर्जितशात्रवगणस्य कष्ट वै ।
दृष्टवते लोकेऽसौ जनाय कि रोचते सपत् ॥ १०४ ॥
विस्मयस्थायिभावस्तु भावैर्व्यक्तोऽद्भुतो मत ।
जनचेतश्चमत्कारि वस्त्वालम्बनमुच्यते ॥ १०५ ॥
अहोवचनमित्यादिर्भावस्तूद्दीपनो मत ।
अनुभावस्तु दृष्ट्यास्यकपोलस्फुरणादिक ॥ १०६ ॥
रोमाञ्चस्वेदभावादि सात्त्विक परिकीर्तित ।
हर्षसभ्रमभावादि. सचारी तु निगद्यते ॥ १०७ ॥
श्रीरायक्षितिपस्य राजसदनं तत्राद्भुता सत्सभा
तत्र स्थापितविष्टर रुचिकरं तत्र स्थितं भूपतिम् ।
तद्देह तदनूनभूपणगणं तत्कान्तिजाल पर
तद्व्याप्ति जनता विलोक्य परमा चित्रीयते सततम् ॥
शमाख्यस्थायिभावोऽय विभावादिचतुष्टयात् ।
व्यक्त शान्तरस प्रोक्तो गुणशालिकवीश्वरै ॥ १०९ ॥
आलम्बनविभावस्तु पञ्चाना परमेष्ठिनाम् ।
स्वरूप निजरूप वा निश्चयव्यवहारत ॥ ११० ॥
उद्दीपनास्तु स्याद्वादवेदिसभापणादय ।
सर्वत्र समभावादिरनुभाव प्रकीर्तित ॥ १११ ॥

पुलकस्तम्भभावादि सात्त्विक परिकीर्तित ।
सचारिभावो निर्वेदधृतिमत्यादिको मत ॥ ११२ ॥
श्रीरायक्षितिनाथपालितमहादेशे कवीन्द्रस्तुते
योगीन्द्रा जिनतत्त्वबोधमहिता सम्यक्त्वरत्नाकरा ।
रागद्वेषविमुक्तशान्तमनसश्चारित्रपूज्याङ्गका-
ध्यायन्त परमात्मतत्त्वममल श्राम्यन्ति सौख्यास्पदम् ॥११३॥
रसलक्षणमत्रोक्त रसभेदोऽपि निश्चित ।
स्थायिभावादिसामग्री रसाना कथिता मया ॥ ११४ ॥
इत पर रसाना तु वर्णस्तदधिदेवता ।
कार्यकारणभावश्च विरोधोऽप्यविरोधिता ॥ ११५ ॥
निरूप्यते जगत्ख्यात कादम्बाम्बुधिचन्दिर ।
शृणु राय महीनाथ काव्यगोष्ठिविशारद ॥ ११६ ॥
स्यादिन्दीवरवर्णस्तु रसश्शृङ्गारनायक ।
तस्याधिदेवता लोके वासुदेव प्रकीर्त्यते ॥ ११७ ॥
सुधाधवलवर्ण स्याद्रसो हास्याभिधानक ।
लोकेऽधिदेवता तस्य विघ्नराजो निरूपित ॥११८॥
कषायवर्णता याति करुणाख्यो रसो भुवि ।
तस्याधिदेवता प्रोक्ता श्राद्धदेव कवीश्वरै ॥११९॥
जपाकुसुमवद् रक्तवर्णो रौद्रो रसो मत ।
तस्याधिदेवता लोके रुद्रनामा निरूप्यते ॥१२०॥
गौरवर्णेन बाभाति लोके वीररसोऽनिशम् ।
तस्याधिदेवता लोके शतमन्यु प्ररूप्यते ॥१२१॥
भयानकरसोऽप्यत्र धूम्रवर्ण प्रकथ्यते ।
तस्याधिदेवता लोके महाकालोऽनुमन्यते ॥१२२॥
रसो बीभत्सनामा च नीलजीमूतसन्निभ ।
तस्याधिदेवता लोके नन्दिनामा निबुध्यताम् ॥१२३॥

अद्भुताख्यरसो लोके हेमवर्णेन राजते ।
तस्याधिदेवता लोके विधाता प्रणिगद्यते ॥१२४॥
शान्तनामरसो लोके शुद्धस्फटिकवर्णभाक् ।
तस्याधिदेवता लोके परब्रह्म प्रकाश्यते ॥१२५॥
श्रृङ्गाराज्जन्म हास्यस्य करुणो रौद्रजन्मभाक् ।
अद्भुतो जायते वीराद् बीभत्साच्च भयानकः ॥१२६॥
इतरस्माद्रसाज्जन्म नास्ति शान्तस्य शान्तता ।
इतरो वा रसो लोके जायते न कदाचन ॥१२७॥
श्रृङ्गारस्य विरोधी हि बीभत्सः कथ्यते बुधैः ।
भयानकविरोधी तु लोके [1]वीररसो भवेत् ॥१२८॥
अद्भुतो रौद्रवैरी तु करुणो हास्यबाधकः ।
शान्तस्य केनचिन्नास्ति मित्रत्वं वा विरोधिता ॥१२९॥
नानाभावमनोज्ञभावविलसत्तारावलीराजिते
नानारम्यरसौघचारुतरसज्ज्योत्स्नावलीभासिते ।
सत्काव्ये गगने नृसिंहनृपते कादम्बवंशाम्बुधे
भो भो धीर भवान् मनोज्ञ [2]विलसत्कीर्तिश्च ते वर्धताम् ॥१३

इति रसभावनिश्चयनामा तृतीयः परिच्छेदः ।

१. विवरसो । २. °विलसत्कीर्ती च रुद्रायता ।

# नायकभेदनिश्चयो नाम

## चतुर्थ परिच्छेदः

गुण्यभावे गुणो नास्ति यद्वन्नेतुरसभवे ।
रसभावा जगत्यत्र सभवन्ति कदापि न ॥१॥
यतस्ततो नायकस्य नायिकायाञ्च लक्षणम् ।
तद्भेदाञ्च निरूप्यन्ते तन्निश्चयफलार्थिनाम् ॥२॥
जनानुराग प्रियवादिभावो वाग्मित्वशौचे विनय स्मृतिश्च ।
कुलीनतास्थैर्यदृढत्वमाना माधुर्यशौर्ये नवयौवन च ॥३॥
उत्साहो दक्षता वुद्धिस्त्यागस्तेज कला मति ।
धर्मशास्त्रार्थकारित्व प्रज्ञा नेतृगुणा इमे ॥४॥
एतद्गुणविशिष्टोऽय नायक कथ्यते वुधै ।
स नायक पुन प्रोक्तश्चातुर्विध्ययुतो भवेत् ॥५॥
धीरोदात्तस्तथा धीरलालितो धीरशान्तक ।
धीरोद्धत इति ख्याताश्चत्वारो नायका भुवि ॥६॥
क्षमासामर्थ्यगाम्भीर्यदयागुणविराजित ।
आत्मश्लाघामानशून्यो धीरोदात्तो मत सताम् ॥७॥
राजसर्वज्ञकल्पोऽय रायबङ्गमहीपति ।
महासमुद्रदेशीयो भूमिदेश्यो विराजते ॥८॥
भोगे कलाया लोलो यश्चिन्तातीतसुखोदय ।
मन्त्र्यर्पितात्मसिद्धिश्च स्याद्धीरललितो मृदु ॥९॥
श्रीरायबङ्गरमणो निजकामिनीना-
मालोकन दृढतर परिरम्भण च ।

वाणीविलासमधरामृतचारुपान
कुर्वन् महारुचिरसौधतले सदास्ते ॥१०॥
विवेकशौचसौभाग्यसुप्रसन्नत्वभूपित ।
विलासरसिको धीरशान्त इत्युच्यते वुधै ॥११॥
कादम्बनाथ परिपालितरम्यराज्ये
केचिद् विलासरसिकास्सुभगा प्रसन्ना. ।
नित्य विवेकगुणभासुरमूर्तयस्ते
स्वेष्टाङ्गनासु कमनीयतरा रमन्ते ॥१२॥
मायामात्सर्यचण्डत्वचलचित्तसमन्वित ।
आत्मस्तुतिपरो मानी धीरोद्धत इतीरित. ॥१३॥
सप्ताम्भोनिधिपानकं कुलगिरिव्रातस्य संचालन
दिग्दन्तिव्रजकम्पन गगनतारानीकनिस्फालनम् ।
एषामात्मविलासनं प्रकटितं तेऽमी वय दुर्दमा
इत्येव वदतो रिपून्जयति तान्[1] श्रीरायभूमीश्वर ॥१४॥
चत्वारो नायका एते रसेषु नवसु क्रमात् ।
अवस्थाभेदत सर्वे वर्तन्ते गुणशालिन· ॥१५॥
एषा चतुर्णा नेतॄणा धीरोदात्तादिभेदिनाम् ।
शृङ्गाराख्यारसे प्रोक्ता प्रत्येक चतुरात्मता ॥१६॥
अनुकूल शठो धृष्टो दक्षिणो नायका मता ।
शृङ्गाराख्यरसे सद्भिश्चत्वारो गुणराजिता ॥१७॥
एकस्या नायिकायां य सक्तचित्तो न वुध्यते ।
अन्यस्त्रीसगम सोऽत्रानुकूलो नायको मत ॥१८॥
विचकिलकुसुमाना सौरभे मग्नभृङ्ग
परकुसुमपराग याति नैवात्र तद्वत् ।

---

१. तास्त्रीराय°, २ मद्गली ।

सुरतमधुरकेल्या नायिकाया प्रसक्तो
न हि परवनिताना सगम याति राय ॥१९॥

एकस्या रागशून्योऽपि सराग इव भासते ।
सलापादिविशेषेण य सोऽपि शठ उच्यते ॥२०॥

कादम्बनाथ वचनं सुदयासम ते
ज्योत्स्नासमानमवलोकनचेष्टित च ।
तन्मल्लिकादिवरदानमिद च [1]चित्त
कार्यं न दृष्टमिति वक्ति वधू शठ त्वाम् ॥२१॥

दृष्ट्वान्यकामिनीसङ्गचिह्नोऽपि वितथ वदेत् ।
वैयात्येन स धृष्ट स्यान्नायक. कथितो बुधै ॥२२॥

नमनवचनदम्भो मास्तु मास्तु त्वदीय
कपटमिदमनेक दृष्टमत्यन्तदृष्टम् ।
तव सकलशरीरेऽन्याङ्गनासगचिह्न
सर सर वरकान्ता रायबङ्गं ब्रवीति ॥२३॥

एकाङ्गनालोलचित्त समभावेन वर्तते ।
अन्याङ्गनासु स प्रोक्तो दक्षिणो नायको बुधै ॥२४॥

[2]त्रुटित दुर्बोध च पद्यस्यास्य चरणद्वय यथा पाददिप्पण्या लिखितम्
कर्पूराणि वितीर्य चारुरमणीवृन्दाय दूतीजना
श्रीरायो नृपकुञ्जर प्रहितवान् साहित्यरत्नाकर ॥२५॥

इदमपि दक्षिणनायकनिदर्शनम्—
नीरेज वरमल्लिका किसलय चूतस्य नीलोत्पलं
कङ्केलिस्थितपल्लव निजमहामाहात्म्यससूचकम् ।

---

१ चित्र, २ रौरागापरमादिवर्णविलसन्नामानि " समुदर्यकान्तामहा-रकस्तूरिरागाक्षर ।

दत्वालीजनपञ्चकस्य हि करे कान्ताजनेभ्यो मुदा
श्रीरायो वरदक्षिण प्रहितवान् शृङ्गारदुग्धाम्बुधि ॥२६॥
धीरोदात्तादिनेतॄणा शृङ्गारे षोडशात्मनाम् ।
उत्तमादिविभेदेन प्रत्येक त्रिविधात्मता ॥२७॥
शृङ्गाराख्यरसे नेतृभेदा लोके निरूपिता. ।
अष्टसख्योत्तराश्चत्वारिंशलाख्या' कवीश्वरै' ॥२८॥
एतेषा नायकाना तु सहाया उपनायका ।
विदूषक पीठमर्दो विटो नागरिको मता. ॥२९॥
नायकस्य[1] प्रसगे च नानाहासकरो मत ।
विदूषक सता [2]लोकव्यवहारादिवित्त्व य' ॥३०॥
नायकोक्तेषु कार्येषु पटुर्नायकसद्गुणात् ।
किंचिन्न्यूनगुण प्रोक्त पीठमर्दो बुधोत्तमै ॥ ३१ ॥
नायकाना चित्रवृत्तेरानुकूल्यपरो विट ।
नानाकलाप्रौढियुक्तो मतो नागरिको बुधै. ॥ ३२ ॥
[3]लुब्धाधीरोद्धता'ये च स्तब्धा पापपरायणा ।
[4]ते पुनर्नायकाभासा' पुरुषा प्रतिनायका ॥ ३३ ॥
पूर्वोक्तानां नायकाना यौवने तु गुणाष्टकम् ।
सत्त्वसजातमित्युक्तमधुना तन्निरूप्यते ॥ ३४ ॥
तेजो विलासो माधुर्यं शोभा स्थैर्य गभीरता ।
औदार्य ललित चेति गुणाष्टकमिति स्मृतम् ॥ ३५ ॥
प्राणाभावेऽपि पुरुषो धिक्कारादिपराभवम् ।
क्षमते जातु नो यत्तत्तेज' प्रोक्त विशारदै' ॥ ३६ ॥

---

१ प्रसङ्गे ह, २ व्यवहारादि विध, ३ लुब्धादिरोद्धता ऐ च स्तब्धाः, ४. तेषु नर्नायकाभामा ।

सधैर्यं गमनं दृष्टि सधैर्या स्मितभाषणम् ।
विलासाख्यगुणं प्रोक्तं गुणोद्भासिकवीश्वरैः ॥ ३७ ॥
महत्यपि च सक्षोभे सूक्ष्मा चर्चा करोति यत् ।
तन्माधुर्यं गुणः पुंसां बुध्यतां बुधसत्तमैः ॥ ३७ ॥
शोभायां दक्षता शौर्यं स्पर्धा नीचैर्गुणाधिकैः ।
उद्योगाच्चलनाभावः स्थिरत्वं विघ्नकोटिभिः ॥ ३९ ॥
यत्प्रभाववशात् पुंसि विकृतिर्न कदाचन ।
तद्गाम्भीर्यं सतामिष्टं जगत्त्रयमनोहरम् ॥ ४० ॥
यत्प्राणानपि तद्वापि प्रियोक्त्या सज्जनानलम् ।
सत्करोति तदौदार्यं लोकोत्तरगुणो मतम् ॥ ४१ ॥
शृङ्गाराकृतिचेष्टा तु सहजा कोमला बुधैः ।
ललिताख्यगुणो लोके कथ्यते गुणशालिभिः ॥ ४२ ॥
लक्षणं नायकानां हि प्रतिपाद्याधुना पुनः ।
नायिकालक्षणं तासां भेदोऽपि च निरूप्यते ॥ ४३ ॥
सामान्यनायकप्रोक्तविनयादिगुणान्विता ।
नारी तु नायिका प्रोक्ता सापि नारी चतुर्विधा ॥ ४४ ॥
स्वकीया परकीयाप्यनूढा साधारणा स्मृता ।
अनूढा परकीयैव इत्येकेषां मते त्रिधा ॥ ४५ ॥
धर्मार्थकामयुक्तानां स्वकीया नायिका नृणाम् ।
अन्यास्तु नायिका लोके मता केवलकामिनाम् ॥ ४६ ॥
[1]त्रिवर्णनायकेनेय देवतागुरुसाक्षिका ।
उपात्ता नायिका स्वीया सदाचारक्षमायुता ॥ ४७ ॥
[2]शीलार्जवधैर्यशौर्यलज्जायुक्ता पतिव्रता ।
त्रिवर्गसाधिका लोके स्वकीया ललनोत्तमा ॥ ४८ ॥

---

१. त्रिवर्त° । २ शीलार्जवातितरा शौर्य° ।

कादम्बेश्वररायश्चित्तो(?)रुपद्माकरे
हसी वीरनृसिंहरायकृतसद्धर्माम्बुधे कौमुदी ।
राज्ञी पट्टकृताभिषेकमहिता कन्दर्पकान्तोपमा
कान्ता शीलवती सती [1]मधुरवाक् श्यामासमा राजते ॥४९॥
अनुरागवता केनचित् पुंसा स्वीकृता तु या ।
स्वयमप्यनुरक्ता च सानूढा नायिका मता ॥ ५० ॥
यथा दुष्यन्तनृपतेर्नायिका तु शकुन्तला ।
तथा लोकानुसारेण सानूढा परिकीर्तिता ॥ ५१ ॥
परकीयाप्यनूढेव ज्ञातव्या विद्यते तयो ।
ईपद्भेद स्वयं रक्तानूढा नायकमिच्छति ॥ ५२ ॥
परकीया [2]सखीवाचा याति नायकसंनिधिम् ।
इति केचिद्वदन्त्येके न हि भेदस्तयोरिति ॥ ५३ ॥

तद्यथा—

परेण परिणीता च परकीया मता पुन. ।
अनूढा कन्यका चापि परकीया प्रकीर्तिता ॥ ५४ ॥
परेण परिणीता तु नास्ति मुख्यरसे क्वचित् ।
अनूढा कन्यका प्रोक्ता गौणमुख्यरसे यथा ॥ ५५ ॥

परपरिणीता नायिका मुख्यरसे उदाहर्तुमयोग्या । अनूढा कन्यका तु गौणमुख्ये च रसे उदाहर्तुं योग्येत्यर्थः ।

मनसिजनृपरूपं रायवङ्ग सुधाब्धि
तदमलगुणराश्याकर्णनाद् राजकन्या ।
मदनकदनबाणै पीडिता कामयन्ते
नुतरतिसमरूपा दिव्यलावण्यभाज ॥ ५६ ॥

---

१ काय समा राजते । २ सनिवाचा ।

कलाप्रौढियुता धैर्यराजिता दम्भपण्डिता ।
वेश्या साधारणा प्रोक्ता नायिका विदुषा वरै ॥ ५७ ॥
दातैव नायकस्तस्या न हि कश्चित् परो भुवि ।
रक्तेव सदने पुंसि निर्धनं वर्जयेन्नरम् ॥ ५८ ॥
कादम्बनाथनृप चारुमहासमृद्ध-[1]
वेश्याजना रतिसमानमनोज्ञरूपा ।
कामैन्द्रजालिककृताद्भुतमोहविद्या-
कल्पा विभान्ति कुसुमास्त्र[2]शरौघदेश्या. ॥ ५९ ॥
स्वकीया नायिका मुग्धा मध्या लोके तथा मता ।
प्रगल्भेति त्रिधा सद्भिस्तासां लक्षणमुच्यते ॥ ६० ॥
नवीनयौवना नारी नवमन्मथविक्रिया ।
वक्रा सुरतलीलायां मुग्धा किंचिद् रुषा युता ॥ ६१ ॥
आस्यं नापि ददाति चुम्बनविधौ स्वाङ्गं निजालिङ्गने
नो धत्ते नवमन्मथग्रहयुता लज्जाभरात् कुप्यति ।
क्षेत्रारम्भसमानयौवनयुता कन्या नवोढा सती
रायक्ष्मापतिनायकस्य जनयत्युल्लासनं चेतसि ॥ ६२ ॥
उत्पन्नयौवनोद्भूतकामा मध्या च नायिका ।
रतिक्रियापरवशा न जानाति किमप्यसौ ॥ ६३ ॥
चुम्बन्तं परिरम्भणं दृढतरं कुर्वन्तमङ्गोद्भव
श्रीरायं निजनायकं परमसंतोषं नयन्ती सती ।
शृङ्गाराम्बुधिकौमुदी रतिसुखाम्भोधौ निमग्ना परं
नो जानाति सुखातिरेकवशगा केलिं[3] परा कामपि ॥६४॥
अत्यन्तयौवनात्यन्तकामा नायकवक्षसि ।
लीनेव सुरतारम्भे प्रगल्भा पारतन्त्र्यभाक् ॥ ६५ ॥

---

१ °महासवेश्याजनारति । २ शवाघ । ३ केशिं ।

श्लिष्यन्त स्मररायनायकवर स्पृष्ट्वा प्रगल्भा सती
 मोहोद्रेकवशात् पर परवशा केलीविधी राजते ।
लक्ष्मीर्वक्षसि वा स्मरेशलिखितं तज्जीव(? सज्जीव)चित्र रते
 शृङ्गाराम्बुधिजातनिश्चलतरा श्रीकल्पवल्लीव सा ॥६६॥
धीरात्वधीरा लोके हि धीराधीरेति सा मता ।
त्रिविधा नायिका मध्या गुणशालिकवीश्वरैः ॥ ६७ ॥
उपहास[1]युता या च वक्रवाचा स्वनायकम् ।
खेदयेत्सापराध सा मध्या धीरा प्ररूप्यते ॥ ६८ ॥
श्रीराय ते नभसि वक्षसि कौमुदीय
 भाले वरे मकरिका वरवज्रमस्ति ।
तत्पुण्यमत्र महदस्ति तथा फल च
 तत्रैव तिष्ठ न तु मा स्पृश याहि याहि ॥ ६९ ॥
सापराध निजेश या वचसा कर्कशेन हि ।
रुदती भेदयेत् सा त्वधीरा मध्या मता यथा ॥ ७० ॥
श्रीराय निजगेहमागतमिम दृष्ट्वा सतीत्यब्रवी-
 न्नाथात्रागमन नवीनमिदमाश्चर्य च पुण्य मम ।
··· मौक्तिक विचकिलस्रग्गन्धवज्र त्वया
 धन्याह सुकृती त्वमेव भुवने नेत्राश्रुधारान्विता ॥ ७१ ॥
प्रगल्भा नायिका त्रेधा धीराधीरे पुनस्तथा ।
धीराधीरेति कथिता नेतृनिश्चयकोविदैः ॥ ७२ ॥
कृतापराधं सुरते नायक दु.खयेद् रुषा ।
या च या वादरेणास्ते सावहित्या सकोपना ॥ ७३ ॥
तादृश प्रति भर्तारं सावशा वा प्ररूप्यते ।
प्रगल्भधीरा भुवने कामसिद्धान्तवेदिभिः ॥ ७४ ॥

---

१ °युजा ।

कोपालिङ्गितलोलकेन वचसा मर्मस्पृशा मालती-
मालाघातनलीलया निजपतिं भीतिं नयन्ती सती ।
श्रीरायं निजकामिनी तममलं हारं गृहे नागसे (? गृहेऽनागत)
कोपं भावजपूज्यराज्यसदन(?) चित्तेऽकरोत्कोविदा ॥ ७५ ॥
श्रीराये गृहमागते हरिलसत्पीठं प्रदाय स्वयं
ताम्बूलं हरिचन्दनं विचकिलं कर्पूरसारोच्चयम् ।
सा कान्ता चतुरङ्गचारुकलया केलीविधिं कुर्वती
नानालीजनसंनिधौ गतरतिं कोपं कृतार्थं व्यधात् ॥ ७६ ॥
निजेशं तर्जनं कृत्वा संताडयति या वधूः ।
अधीरा सा प्रगल्भा च नायिका परिकीर्तिता ॥ ७७ ॥
कोपान्नायिकया निजेशनृपतिः श्रीरायबड्गो गृही
मालत्या कृतमालया श्रुतिगतैः श्रीकर्णपूरैरपि ।
वामेनाङ्घ्रितलेन रोधनयुजा संताड्यमानो हसन्
शान्तस्तोषपरः कृती सुकृतिनामग्रेसरो जायते ॥ ७८ ॥
वक्रवाचं सोपहासां या ब्रूते रमणी क्रुधा ।
धीराधीरा प्रगल्भा सा नायिका कथिता बुधैः ॥ ७९॥
श्रीराय भो नगसि पश्यसि दैन्यवाचं
ब्रूषे मनोज्ञतरवस्तुततीमुदासी ( ? ) ।
सत्यं तथैव भुवने न च कोऽपि दोषो
दृष्टस्तथापि [1]यमपाटिजनस्य कोपः (?) ॥ ८० ॥
त्रिभेदसंयुता मध्या प्रत्येकं द्विविधा पुनः ।
ज्येष्ठा चेति कनिष्ठा च षड्विधाभूत् सतां मते ॥ ८१ ॥
एवं प्रगल्भा कथिता षड्विधा कविपुङ्गवैः ।
ज्येष्ठाकनिष्ठयोरत्र दृष्टान्तः प्रतिपाद्यते ॥ ८२ ॥

---

१ मम पाटि° ।

कासार जललीलया परिगते दृष्टो रमण्या नृप
श्रीरायो जलसेचनं परिलसद्यन्त्रेण कृत्वा सतीम् ।
मज्जन्ती सरसीजले भयवशात्कृत्वा परा कामिनी
चुम्बित्वाधरपान[1]सज्ञजलधौ तन्तन्यते मज्जनम् ॥ ८३ ॥

चुम्ब्यमाना नारी ज्येष्ठा । इतरा कनिष्ठा ।

नायिकालक्षण तासा भेद चोक्त्वाधुना पुन ।
तासामष्टाववस्थास्ता: प्ररूप्यन्ते भृश मया ॥ ८४ ॥
स्वाधीनपतिका नारी काचिद्वासकसज्जिका ।
कलहान्तरिता काचिद्विप्रलब्धा परा मता ॥ ८५ ॥
विरहोत्कण्ठिता काचित् काचित् प्रोपितभर्तृका ।
खण्डिता रमणी काचित् काचिदन्त्याभिसारिका ॥ ८६ ॥
यस्या सामीप्यमाश्रित्य यदधीन पति सदा ।
स्वाधीनपतिका नारी सा प्रोक्ता रसकोविदै ॥ ८७ ॥
काञ्चीनारी नृपतितिलको रायवङ्क सदाल
स्वारुह्याङ्क पिबति मधुर चाधर प्रेक्षतेऽङ्गम् ।
तत्सलाप निगमयति वै सौरभ जिघ्रतीद
स्पृष्ट्वा स्पृष्ट्वा वरकुचयुगं मोदते कामतन्त्र ॥ ८८ ॥
प्रियस्यागमन श्रुत्वा मुदा भूपणभूपिता ।
या नारी सा स्तुता लोके सता वासकसज्जिका ॥ ८९ ॥
श्रीरायागमनोत्सुका रतिसमा नारी मनोहारिणी
सालकाररसोरुवृत्तिगुणसद्रीतिप्रभावान्विता ।
नानावर्णनया कवीन्द्रकृतया युक्ता [2]सशय्या सदा
सार्था सूक्तिविलासिनी गतमला चारु प्रबन्धायते ॥९०॥
आगत नायक कोपात्तिरस्कृत्य तदर्थिनी ।
या दु खपीडिता सात्र कलहान्तरिता यथा ॥ ९१ ॥

---

१ सह्यय । २ सशय्यास्सदा ।

भो भो निष्ठुरभाषिणि प्रियतमे श्रीरायबङ्ग पति–
   र्निर्धूतो रतिनाथव्याहतकरोऽप्यज्ञानदोषात्त्वया ।
दु ख त्व विदधासि चेत् पुनरसौ नायाति पुण्याम्बुधि.
   शेषस्त्रीसरसीजचारुनिकरे श्रीराजहसायते ॥ ९२ ॥
नागते नायके गेह सकेतविषय यदा ।
तदावमानिता नारी विप्रलब्धा मता यथा ॥ ९३ ॥
सरसमधुरवाणीभाषिता नायकेन
   तदमलवचनेऽहं प्रत्यय साधु कुर्वे ।
उरुतरसमयालीप्रापिता तेन दूति
   नहि नहि मम नाथ प्रत्ययो नापि कुत्र ॥ ९४ ॥
असत्यरहिते नाथे विलम्बनयुते सति ।
उत्कण्ठा कुरुते या सा विरहोत्कण्ठिता मता ॥ ९५ ॥
श्रीराये निजनायके रतिपतौ काल चिर नागते
   नारी चन्द्रमस न पश्यति मनोजातेष्टचापेहया ।
नारीवृन्दवच शृणोति न कलकण्ठाना स्वराणा धिया
   द्रष्टु नेच्छति कौमुदी विचकिला (? विचकिता) सारोरुबाण-
भ्रमात् ॥ ९६ ॥
देशान्तर गते नाथे या नारी मानसी व्यथाम् ।
करोति सा मता लोके बुधै प्रोषितभर्तृका ॥ ९७ ॥
राये दिग्विजयाय सैन्यकलिते याते स्वकीया सती
   स्नान मुञ्चति भूषण च मलिन गृह्णाति चीनाम्बरम् ।
माला चन्दनलेपन परिलसत्कस्तूरिकाचित्रक
   त्यक्त्वा गायति वीणया निजपते सौभाग्यमाला पराम् ॥ ९८ ॥
ज्ञातमन्मथचिह्ने या नारीर्ष्या विदधाति सा ।
खण्डिता रमणी प्रोक्ता नायके रसिकोत्तमे ॥ ९९ ॥

मनसिज तव कार्यं मन्मथो वेत्ति सर्व-
महमपि तव काये गोपिते वेद्मि किंचित् ।
[1]अनिकटनिवासी वामपादोर्ऽपितोऽस्या
विलसदरुणवर्णो दृश्यते राय साक्षात् ॥ १०० ॥

नाथ सरति या नारी दूती वा सारयत्यसौ ।
प्रोक्ताभिसारिका लोके नायिकाभेदवेदिभि ॥ १०१ ॥

वञ्चित्वात्मीयलोक या पति गच्छति सागसम् ।
सा रायबङ्गभूमीशगासनाद्भीतिमृच्छति ॥ १०२ ॥

रसप्रकरणे प्रोक्तश्चतुर्धा विप्रलम्भक ।
पूर्वानुरागो मानश्च प्रवास करुणात्मक ॥ १०३ ॥

वियुक्तनायकस्यासौ वियुक्ताया. स्त्रियोऽपि च ।
शृङ्गारो विप्रलम्भाख्यो वक्तव्यो वदता वरै ॥ १०४ ॥

नवीनालोकनाज्ञातरागयोरवितृप्तयो ।
पूर्वानुरागो दम्पत्योरवस्था परिकीर्त्यते ॥ १०५ ॥

अन्यस्त्रीसगमादीर्ष्या विकारो मान उच्यते ।
परदेश गते नाथे प्रवासो विरहात्मक ॥ १०६ ॥

अनुरक्तस्य नाथस्य नायिकायाश्च तादृश ।
एकस्य मरणे जात शृङ्गार करुणात्मक ॥ १०७ ॥

खण्डिताया नायिकाया शृङ्गारो मान उच्यते ।
प्रोषितप्रियनारीषु प्रवास परिकीर्तित ॥ १०८ ॥

कलहान्तरिता या वा विप्रलब्धा च या सती ।
विरहोत्कण्ठिता या च तासु पूर्वानुरागक ॥ १०९ ॥

परलोक गते नाथे कामिन्या वा प्रकृष्यताम् ।
अवशिष्टजने सद्भि शृङ्गार करुणात्मक ॥ ११० ॥

---

१ अनिकतटनिवासो वामपादार्पितोऽस्या ।

आसा स्त्रीणा सखी दासी लिङ्गिनी प्रतिवेशिनी ।
धात्रेयी शिल्पिका कारूर्दूत्य प्रोक्ता स्वय तथा ॥ १११ ॥
भो भो राय मनोजपातकमहो क्रूरेण सपीडयते
नारी मुञ्चति वाग्विलाससरणी धत्ते तनुत्व तनो ।
आहारोऽपि न रोचते भ्रमवशा त्वद्भावचित्र दृशा
दृष्ट्वाऽलिङ्गति चुम्बति[1] त्वरितमागत्येह ता रक्षतात्॥११२॥
पूर्वोक्तनायिकाना तु यौवने सत्त्वसभवा ।
अलङ्कारा प्ररूप्यन्ते विंशति कविकुञ्जरै ॥ ११३ ॥
भावहावौ तथा हेला शोभा कान्तिश्च दीप्तिका ।
मधुरत्व तथा चोक्त प्रागल्भ्य च वदान्यता ॥ ११४ ॥
धैर्य लीला विलासश्च विच्छित्तिर्विभ्रमस्तथा ।
किलकिञ्चितमप्युक्त तथा मोट्टायित तथा ॥ ११५ ॥
अथ कुट्टमित चोक्त विब्बोको ललित तत ।
विहृत परिकीर्त्यन्ते लक्षणानि पृथक् पृथक् ॥ ११६ ॥
एषामाद्यास्त्रयो देहसभवा कथितास्तत ।
सप्तालङ्कृतयो गीतास्तत स्वाभाविका दश ॥ ११७ ॥
चित्तवृत्तिविशेषोऽय कन्दर्पविकृतिच्युत ।
सत्त्व तस्याद्यविकृतिर्भावो मन्मथयोगिनी ॥ ११८ ॥
भाविहावाद्यलङ्कारसाधनीभूत उच्यते ।
भावोऽय सर्वशृङ्गाररसहेतुश्च कोविदै ॥ ११९ ॥
जात्यश्वारूढराय पुरसरणिगत राजकन्या विलोक्य
भ्रूविक्षेपाक्षिलौल्य कुसुमशरशराघातसपीड्यमाना ।
मन्द मन्द स्वचेतो विशदपि नवपुष्पायुधाश्चारुरूपा
ररम्यन्ते मनोज्ञप्रकटितनिजलावण्यभाजो गृहाग्रे ॥ १२० ॥

---

१ त्वरितागत्य प्राण रक्षतात् ।

चित्तशृङ्गारभूतोऽयं भ्रूलोचनविकारकृत् ।
भाव एव बुधैर्लोके हावालङ्कार उच्यते ॥ १२१ ॥
आस्येन्दुनिर्गतमनोहरचन्द्रिकाभैः
पुष्पेषुबाणसदृशैस्तरलैः कटाक्षैः ।
शृङ्गारभावगमकैर्नृपरायवङ्ग
नारी भवन्तमवलोक्य सुखाब्धिगाभूत् ॥ १२२ ॥
शृङ्गारगमको हावो यः सुस्पष्टः प्रवर्तते ।
स एव हेला विबुधैः कथ्यते गुणराजितैः ॥ १२३ ॥
चकोरीसदृशीदृष्टिकटाक्षायतजिह्वया ।
रमण्या तव रायेश रूपं पेपीयतेऽमृतम् ॥ १२४ ॥
रूपोपभोगतारुण्यैः शरीरालंकृतिः कृता ।
या सैव शोभा गदिता महाकविमतानुगैः ॥ १२५ ॥
तरुण्या रूपसौन्दर्यं स्मरचेतोहरं वरम् ।
दृष्ट्वा चित्रीयते रायो भूषणापेक्षया विना ॥ १२६ ॥
मनोरागेण निबिडा सैव शोभा निगद्यते ।
कान्तिः स्त्रीणां मनोजाज्ञाशालिनीना बुधोत्तमैः ॥ १२७ ॥
आरामकुञ्जगतमुग्धसती बिभेति
ध्वान्ते गते निजकटाक्षमयूखजालैः ।
पादाब्जचारुनखदीधितिभिश्च राय-
वङ्गान्विता सुरतकेलिविदः सकाशात् ॥ १२८ ॥
विस्तारं याति या कान्तिः सैव दीप्तिर्मता सताम् ।
पुष्पायुधमहामेनादेश्यस्त्रीषु प्रवर्तते ॥ १२९ ॥
श्रीरायवङ्गसहिता गुरुतुङ्गसौध-
मारुह्य मारतरुणीनिभकोमलाङ्गी ।
सिंहासने स्थितवती निजदेहदीप्त्या-
काशं प्रकाशयति चारुतडिल्लतेव ॥ १३० ॥

अवर्णनोयवस्तूना सबन्धेऽपि प्रवर्तते ।
यद्द्रव्यत्व तदेवात्र माधुर्य प्रतिपादितम् ॥ १३१ ॥
नृपतितिलकराये कोपिते कोमलाङ्गी
मलिनवसनयुक्ता रम्यता नो जहाति ।
घनकृतवरणेय कौमुदी सत्कला वा
शितितनुमदनो वा रम्यता नो जहाति ॥ १३२ ॥

मनोवचनकायेभ्य समुत्पन्नभयस्य या ।
प्रगल्भता निवृत्ति सा ज्ञातव्या बुधकुञ्जरै ॥१३३॥

मनोवचनकायजनितभीतिरहित कलाशास्त्रप्रयोगचातुर्यं प्रागल्भ्यमिति भाव ।

यद्गान् परमामृतं श्रुतिहर श्रुत्वा मुदा कोकिलो
[1]रौति प्राप्तसुखं शुकोऽपि वचन श्रुत्वा यदीय प्रियम् ।
ब्रूते सूक्तिमिमा यदीयनटन दृष्ट्वा शिखी नृत्यति
स्वात्मानन्दसमन्विता जयति सा श्रीरायकान्ता सती
॥ १३४ ॥

आयासे सति कामिन्या बहावपि गुणोत्तम ।
विनयोत्कर्ष औदार्यमुच्यते कविनायकै ॥१३५॥
नवकेलिविनोदेन श्रान्ता पानीयलीलया ।
तन्वी विमुक्तनिद्रापि रायशय्या न मुञ्चति ॥१३६॥
चापल्यरहिता चित्तवृत्ति स्थिरतराथवा ।
तरुणीजनसबद्धा या सा धैर्य निरूप्यते ॥१३७॥
रायनाथस्य रागे या यादृशी रमणी तु सा ।
कोपेऽपि तादृशी जाता महादेवीपदे स्थिता ॥१३८॥

---

१ लौति श्रातसुख सुखोपि ।

क्रियाविशेषैरधिकैर्मनोहरतरैरपि ।
नायकाभिनयो लीला नायिकाविहितो यथा ॥१३९॥
हसति वसति चास्ते लोकते याति दत्ते
गदति नदति शेते याचते राजतेऽलम् ।
लिखति पिबति भुङ्क्ते रोदिति[1] मोदते च
नृपतितिलकरायो यादृशस्तादृशी सा ॥१४०॥
दृष्टे निजेशे कामिन्या देहसंजनितो भृशम् ।
क्रियाद्यतिशय प्रोक्तो विलासो रसिकैर्यथा ॥१४१॥
रायेश स्मरसन्निभ स्मरसख क्षीराब्धिचन्द्र मुदा
दृष्ट्वा स्विद्यति कम्पते सृतिकर धैर्यं च मुञ्चत्यहो ।
उत्कण्ठा[2] मनुते न नौति सरसालोक शरच्चन्द्रिका-
सकाश रमणीमनोजनशठो कन्दर्पसिद्धान्तवित् ॥१४२॥
तरुणीकायदेशे स्वीकृता स्वल्पाप्यलक्रिया ।
करोति जनतानन्द या सा विच्छित्तिरुच्यते ॥१४३॥
किसलययुतकर्णा मल्लिकाकुड्मलौघै
कृतरुचिकरहारा मालतीस्रग्विभूषा ।
मलिनवसनयुक्ता माधवी कन्दुकेन
विहरति रमणी या साकरोद्रायसौख्यम् ॥१४४॥
आयात नायक श्रुत्वा सभ्रमेण मुदा सती ।
अस्थाने भूषणं धत्ते यत्तद्विभ्रम उच्यते ॥१४५॥
आगच्छन्त निजेश रतिपतिसदृश रायवङ्गं निशम्य
प्रोद्भिन्नानन्दमूर्ति परवशगमनादञ्जनैर्लिप्तकण्ठा ।
पीनोत्तुङ्गस्तनाग्रे मृगमदतिलकालकृता भालभागे
हारालकारयुक्ता रतिसमरमणी चारुता[3] मूर्तिरास्ते ॥१४६॥

---

१ रोदते, २ मरुतेन नौति, ३ नूर्तिचित्ते ।

कृताश्रूणा शङ्कादीना साकर्य रमणीजने ।
किलकिञ्चितमित्युक्त शृङ्गाररसकोविदै ॥१४७॥
कादम्बनाथमदनेन सुधाधरेऽल
सपीडिते मधुरचुम्बनपानपूर्वम् ।
तन्वी तनोति मुदमश्रु च तर्जन च
सीत्कारताडनविनोदपदप्रहारात् ॥१४८॥
नाथस्य चित्रे वस्त्रे च प्रतिमाभरणादिपु ।
नाथभावेन या वुद्धि सा मोट्टायितमुच्यते ॥१४९॥
स्मृत्वा निजेश स्वाङ्गस्य भङ्गो जृम्भणपूर्वक ।
पृष्ठादिनमनादिर्वा मोट्टायितमुद्गीरितम् ॥१५०॥
रायरूपपटी दृष्ट्वा तन्वी मोहेन चुम्वति ।
आलिङ्गति च रायेन्द्र इति मत्वा प्रमोदिनी ॥१५१॥
आलीजनेन नृपकुञ्जररायवङ्गे
सवर्णिके मनसि तत्स्मरण विधाय ।
गात्र विवर्तयति वाहुयुग च तन्वी
[1]वक्र करोति मदनग्रहपीडिता सा ॥१५२॥
आलिङ्गने चुम्वनादौ कृते वा जीवितेशिना ।
अन्तरङ्गे सुख वाह्ये रोप कुट्टमित यथा ॥१५३॥
आलिङ्ग्य चुम्बति नृपे सति रायवङ्गे
नारी मनोजसुखवार्धिगतापि चित्ते ।
हस्तेन कम्पनयुतेन निवारयन्ती
रोष करोति पुलकालिविराजमाना ॥१५४॥
गर्वगौरवमालम्ब्य तरुण्यानादर कृत ।
जीवितेशे स विव्वोक कथ्यते रसिकैर्जनै ॥१५५॥

---

१ चक्र ।

आगत्य रायनृपतौ निजपादयुग्मे
नत्वापराधमखिल रमणि क्षमस्व ।
इत्युक्तिमात्तविनया वदति प्रवीणा
मर्मजया वनितया न कृत कटाक्ष ॥१५६॥
शरीरावयवन्यास स्निग्धकोमलतायुत ।
तरुणीजनसवन्धी ललित प्रतिपाद्यते ॥१५७॥
भ्रूविक्षेपं किसलयमृदु वाग्विलास सुमाभ
नेत्रालोक कुवलयनिभ पादपङ्केजयानम् ।
चन्द्रौपम्य मधुरहसन कौमुदीसाम्ययुक्त
कृत्वा कान्ता जनयति मुद रायभूमीश्वरस्य ॥१५८॥
वक्तु योग्यमपि स्वान्तस्स्थित नारी निजेगिना ।
न ब्रूते लज्जया यत्तद्विहृत परिभाषितम् ॥१५९॥
उद्याने प्रीतियुक्ता विमलसलिलसत्क्रीडनेच्छापि कान्ता
प्रासादारोहरक्ता मधुरतरलसत्कन्दुकक्रीडनेच्छा ।
दोलालीलामनीषा सुकविकृतमहाकाव्यगोष्ठीप्रसक्ता
न ब्रूते व्रीडया या मुदमनयदिमा तन्मनोज्ञो निजेश ॥१६०॥
विनयादिगुणा प्रोक्ता नेतृसाधारणा हरा ।
[1]गुणाष्टक च दृष्टान्तास्तेषामूह्या विवेकिभि ॥१६१॥
यथोचित्तं नायकोक्तभावहावादयो गुणा ।
तेषामुदाहृतिर्ज्ञेया नायकेऽपि विशारदे ॥१६२॥
भो भो वीरनृसिहराय नृपते लोकत्रये सन्ति ये
नेतारो बहवश्च तेऽपि सुलभा[2]श्चेतोहरा नो सताम् ।
नानावाग्मिकवीश्वरस्तुतिपदानेकोरुकीर्तिप्रथ
धीरोदात्ततया प्रसिद्धपुरुषो लोके भवानेव वै ॥१६३॥

इति नायकभेदनिश्चयो नाम चतुर्थ परिच्छेद ।

---
१. गाणाष्टक, २. श्चेतोहरौ ।

# दशगुणनिश्चयो नाम

## पञ्चमः परिच्छेदः

गुणरीतिवृत्तिशय्यापाकाना लक्षण मया ।
तल्लक्षणार्थिना नृणा बोधाय प्रतिपाद्यते ॥ १ ॥
निर्गुणा रमणी लोके यथा सद्भिर्न पूज्यते ।
निर्गुण काव्यबन्धोऽपि तथा नार्च्यं कवीश्वरै ॥ २ ॥
अतो गुणा प्रकीर्त्यन्ते पूर्वशास्त्रानुसारत ।
कामिराय नराधीश श्रूयता भवताधुना ॥ ३ ॥
सुकुमारत्वमौदार्यं श्लेष' कान्ति प्रसन्नता ।
समाधिरोजो माधुर्यमर्थव्यक्तिस्तु साम्यकम् ॥ ४ ॥
एते दशगुणा प्रोक्ता दश प्राणाश्च भाषिता ।
यथासख्य मया तेषा लक्षण प्रतिपाद्यते ॥ ५ ॥
श्रुतिचेतोद्वयानन्दकारिणा कोमलात्मनाम् ।
वर्णाना रचनान्यास सौकुमार्यं निरूप्यते ॥६॥
श्रीरायवङ्गक्षितिनायकस्य कीर्तिर्विशाला वरचन्द्रिकेव ।
न चेत् त्रिलोकीजनचित्तजात सतापजाल क्व निराकरोति ॥ ७ ॥
अर्थचारुत्वगमक पदान्तरविराजितम् ।
पदाना यदुपादान तदौदार्यं मत यथा ॥ ८ ॥
शब्दानामभिधेयाना [2]गुणोत्कर्षा यदाथवा ।
तदौदार्य मत लोके तदुदाहरण यथा ॥ ९ ॥
कादम्बनाथस्य मदान्धशूरक्षोणीधरोत्तुङ्गमहागजेन्द्र ।
[3]दिग्दन्तिनैरावतनामकेन स्पर्धा विधत्ते जगदद्भुतोऽसौ ॥१०॥

---

१ °जाता, २ गुणोत्कर्षाय योऽथवा, ३ दिग्गतिनैरावत°,।

परस्पर प्रयुक्तानि स्यूतानीव पदानि वै ।
निविडानि प्रवर्तन्ते यत्र स श्लेप उच्यते ॥ ११ ॥

यस्योत्तुङ्गविशालकीर्तिविसर दृष्ट्वा जगन्मोदते
क्षीराब्धिर्दिगिभो महाधवलिमा व्योमापगावन्धुरा ।
नानाकारविचित्रशारदमहामेघावलीप्रोल्लस-
त्कैलासाचलभूतिसारमिति ता मत्वा जगज्जृम्भितम् ॥१२॥

अल्पप्राणाक्षराण्येव निविडानि पदानि वै ।
यत्र स श्लेप इति वा केचिल्लक्षणमूचिरे ॥१३॥

तदुदाहरणमिदम्—

उल्लसन्ती त्वदीयेय कीर्तिश्रीर्मूर्तिराजिनी ।
जगद्वर्तिकवीन्द्राणा सूक्तिजाले प्रकाशते ॥१४॥

प्रयुक्तो लौकिकार्थोऽपि यथा भवति सुन्दर ।
सा कान्तिरुदिता सद्भि कलागमविशारदै ॥१५॥

अथवा पदवन्धस्योज्ज्वलत्व कान्तिरुच्यते ।
उदाहरणमेतस्या गीयते शृणु भूपते ॥१६

उपवनजलकेलीसक्तकान्ताजनाना
करकृतजलसेक सौवधारानिपेक ।
विगलितकचवन्धान्मालतीमालिकाया
विगलनमतितोप रायवङ्गे व्यदत्त ॥१७॥

प्रयुक्तस्य पदस्यार्थो यत शीघ्र प्रतीयते ।
पदेन वा प्रसन्नोऽर्थो यत्र सा वा प्रसन्नता ॥१८॥

भो रायवङ्ग कीर्तिस्ते शरदभ्रविलासिनी ।
व्योमगङ्गाप्रवाहाभा बम्भ्रमीति जगत्त्रये ॥१९॥

---

१ °भूरिसारमिति का मत्वा ।

अन्यवस्तुगुणारोपोऽन्यत्र योऽय प्रकीर्तित ।
स समाधिरिरिति ज्ञेय कवितागुणकोविदै ॥२०॥
आरोपादन्यधर्मस्य[1] प्रकृतार्थस्य गौरवम् ।
समाधिरुच्यते सद्भिरिति वा लक्षण मतम् ॥२१॥
श्रीरायस्य यशोऽमित कुसुमित त्यागाम्भसा तेजसा-
नल्प तत्फलित विवेकगुणतो ध्वस्तश्च कल्पद्रुम ।
खड्गोऽय नैर[2]कालराहुरमलस्तद्विक्रमस्तुङ्गत
सूक्ति सारसुधा प्रतापतपनो लोकत्रये द्योतते ॥२२॥
पद्ये समासबाहुल्य गद्ये वा हृद्यमुच्यते ।
ओजो गुण कलाशास्त्रविशारदकवीश्वरै ॥२३॥
रङ्गत्तुङ्गतरङ्गसर्गविलसद्गम्भीर[3]शङ्खध्वनद-
म्भोराशिसमानभीकरमहासेनासमूहाद्भुत ।
बन्दिव्रातविनूयमानगुणसन्दोहप्रभावोज्ज्वल
सग्रामाङ्गणराजमानतुरगो जेजीयते राजराट् ॥२४॥
सरसो यत्र शब्दश्च सरसोऽर्थोऽपि जायते ।
तन्माधुर्यमिति प्रोक्त कर्णानन्दविधायकम् ॥२५॥
सरसवचनलोला चारुलीला कटाक्षा
मधुरहसनचञ्चद्वक्त्रनीरेजशोभा ।
मदगजगतिराजपादपङ्केजयुग्मा
रतिसमवरकान्ता रायतोप तनोति ॥ २६ ॥
अर्थानियत्वमित्युक्ते सुखगम्यत्वमुच्यते ।
कष्टकल्पनया शून्यमर्थव्यक्तिस्तदेव हि ॥२७॥
श्रीरायकीर्तिजालेन व्याप्त जगदिद सदा ।
शरच्चन्द्रिकया व्याप्तमिवाभाति मनोहरम् ॥२८॥

---

१ °धर्मप्रकृतार्थस्य, २ वर°, ३ शुभदनिद्राम्भो° ।

मृदुस्फुटोभयाकारवर्णविन्यासशालिन॰ ।
वन्धस्य साम्य समता कथ्यते कविकुञ्जरै. ॥२९॥
श्रीरायवङ्गकान्ताया वदन चन्दिरायते ।
हासो ज्योत्स्नायते नेत्रयुग्म नीलोत्पलायते ॥३०॥
एतैर्गुणैर्भासुरकाव्यवन्धं महाकवीना मृदु वाग्विलासम् ।
श्रुत्वा गुणौघ परिभाव्य चित्ते श्रीरायवङ्गेन्द्र मुद प्रयाहि ॥३१।

इति दशगुणनिश्चयो नाम पञ्चम परिच्छेदः ।



१ मृदुस्फुटाभयाकार ।

# रीतिनिश्चयो नाम

## षष्ठ. परिच्छेदः

रीतिशून्या यथा कन्या न मान्या धरणीतले ।
तथा काव्य रीतिशून्य न मान्य रसिकैर्जनै ॥१॥
रीतीना लक्षण तस्माद् वर्ण्यते भेदसगतम् ।
शृणु रायनराधीश काव्यसारविशारद ॥२॥
माधुर्यादिगुणोपेतपदाना घटनात्मिका ।
रीतिरित्युच्यते सा च चतुर्भेदा सता मता ॥३॥
वैदर्भी-गौडिका-लाटी-पाञ्चालीति चतुर्विधा ।
इयं रीतिश्च काव्यस्य स्वरूपमिति बुध्यताम् ॥४॥
शब्दाश्रितप्रसादादिगुणवैशिष्ट्यसभवात् ।
रीते काव्यस्वरूपत्व निश्चित कविपुङ्गवै ॥५॥
प्रसादादिगुणोपेता समासरहिताथवा ।
समस्तद्वित्रपदका स्वल्पघोषाक्षरावली ॥६॥
वर्गद्वितीयबहुला वैदर्भी रीतिरिष्यते ।
उदाहरणमेतस्या' कथ्यते शृणु धीधन ॥७॥
छत्र सित दण्डयुत धृत ते सनीलरत्न क्षपराय भाति ।
सचञ्चरीकं खरदण्डमब्जं सित यथा राज्यपदस्य चिह्नम् ॥८॥
ओज कान्तिगुणोपेता महाप्राणाक्षरान्विता ।
अत्यद्भुत (?अत्युद्भट)समासा च गौडी रीतिरितीष्यते ॥९॥
कल्पान्तानिलवेगघूर्णितचलत्तुङ्गोरुभृङ्गावली–
राजद्भीकरशीकरान्वितमहाडिण्डीरपिण्डाकर ।

श्रीमद्भूरिमहासमुद्रसमसेनानीकसंभूतधू-
लिजालस्थगिताशुमालिकिरणो जेजीयते रायराट् ॥१०॥
सुकुमारत्वमाधुर्यकान्त्योजोगुणसयुता ।
पञ्चषट्पदसक्षिप्ता पाञ्चाली रीतिरुच्यते ॥११॥
नानारत्नविराजमानमुकुटो हारावलीभूषितो
राजद्राजकदम्बपूजितपदो गाम्भीर्यवीर्यान्वित ।
त्यागोपात्तविशालकीर्तिविसर सिंहासनाधीश्वरो
जीयाद् वीरनृसिहरायनृपति ससारसारोदय ॥१२॥
उक्तरीतित्रययुता भूरिद्वित्त्वाक्षराच्युता ।
अल्पघोषाक्षरा लाटी वृत्ति कोमलतायुता ॥१३॥
गङ्गातुङ्गतरङ्गगारदघनक्षीराब्धिचन्द्रातप
श्रीराजद्वरकीर्तिभासुरगुणो गम्भीरचित्तस्मर ।
नानावाग्मिकवीश्वरस्तुतगुण सर्वज्ञकल्पो महान्
श्रीवीरो नरसिंहवङ्गनृपतिर्जीयाद्धरित्रीतले ॥१४॥
शृङ्गार करुण शान्तो हास्यो मधुरतागुण ।
ओजोगुणयुता शेषा रसा पञ्च निरूपिता ॥१५॥
प्रसादगुणसयुक्ता रसा सर्वे नव स्मृता ।
शेषा सप्तगुणा योज्या यथायोग विशारदै ॥१६॥
रीतिनीरेजषण्डेद्धमहाकाव्यसरोवरे ।
कुरु केलीविधि राजहसदेशीयरायराट् ॥१७॥

इति रीतिनिश्चयो नाम षष्ठ परिच्छेद ।



---

१ कुमार्यौ सुकुमारत्व

# वृत्तिनिश्चयो नाम

## सप्तम. परिच्छेद.

वृत्तिशून्यो न सूत्रार्थो नृणा चेतसि भासते ।
वृत्तिरिक्त तथा काव्य रसिकाय न रोचते ॥१॥
वृत्तीना लक्षण [1]तासा भेदोऽपि प्रणिगद्यते ।
शृणु कादम्बदुग्धाब्धिजातकौस्तुभ रायराट् ॥२॥
सरसार्थौघसदर्भलक्षणा वृत्तिरिष्यते ।
कैशिक्यारभटी भारती मता सात्वती बुधै ॥३॥
अत्यन्तकोमलार्थाना शृङ्गाररसयोगिनाम् ।
[2]करुणाख्यरसे वाचा सदर्भो वाथ कैशिकी ॥४॥
अत्यन्तकर्कशार्थाना रौद्रबीभत्सयोगिनाम् ।
सदर्भरूपारभटी वृत्तिरुक्ता कवीश्वरै ॥५॥
हास्यशान्ताद्भुतरसोपेतार्थाना पृथक् पृथक् ।
ईषन्मृदूना सदर्भो भारतीवृत्तिरुच्यते ॥६॥
ईषत्कठिनवाच्याना सदर्भ सात्वतीष्यते ।
भयानकेन वीरेण रसेन सह योगिनाम् ॥७॥
शृङ्गारकरुणौ लोकेऽत्यन्तकोमलता गतौ ।
अत्यन्तकठिनौ रौद्रबीभत्सौ रसनामकौ ॥८॥
हास्य शान्तोऽद्भुतश्चेति स्वल्पकोमलता गता ।
ईषत्काठिन्यसपृक्तौ मतौ वीरभयानकौ ॥९॥
चतसृणा वृत्तीना क्रमेण निदर्शनानि निरूप्यन्ते ।

---

१. तस्या, २ करुणाख्यरसेदाना ।

कैशिकी यथा –

शृङ्गारसारतरुणीजनकोमलाङ्ग–
सर्वस्वचारुवनवृन्दवसन्तकल्प ।
नारीकटाक्षशरजालविताड्यमान
श्रीरायनायकवर सुकृतीति भाति ॥१०॥

आरभटी यथा –

घण्टाटङ्कारभीकृद्रणपटुतरगन्धेभविभ्राजमान
कोपाजापेन राजत्प्रलयगतमहावह्निकीलाभकेन[1] ।
धिक्कुर्वन् वैरिवर्गं गुरुविपिनसमं शाकिनीढाकिनीभ्यो
दत्त्वा रक्तास्थिमज्जावहुपललबलिं भाति रायो रणाग्रे ॥११॥

भारती यथा—

कीर्तिस्तेऽप्यतिलङ्घते जगदिदं गम्भीरिमा वारिधिं
हस्त कल्पतरुं पराक्रमगुणः कण्ठीरव धीरता ।
स्वर्णाद्रिं नयजालमुग्रभरतं सत्य च भीमाग्रज
रूप मन्मथभूभुजं मृदुवच पीयूषपिण्ड नृप ॥१२॥

सात्वती यथा—

सग्रामाङ्गणभूतले प्रलयकालाग्निस्फुलिङ्गाकृति-
क्रोधाडम्बररक्तलोचनयुग श्रीरायचक्रेश्वरम् ।
दृष्ट्वा वैरिनृपा भयज्वरवशान्मूर्च्छन्ति केचित् परे
दानन्ति प्रतपन्ति यान्ति शरणं वल्मीकवीराधिकम्(?)॥१३॥

अत्यन्तकोमलार्थार्थेऽल्पप्रौढसंदर्भलक्षणा ।
मध्यमा कैशिकी सर्वरससाधारणा मता ॥१४॥

---

१ नयजालमुदग्रभरतं ।

ईषन्मृदुसदर्भाप्यतिप्रौढार्थगोचरा ।
मध्यमारभटी सर्वरससाधारणा स्मृता ॥१५॥

शब्दगतप्रसादमाधुर्यादिदशगुणाश्रितानामर्थविशेषनिरपेक्षाणा वैदर्भ्यादिरीतीनामर्थविशेषापेक्षविशिष्टकैशिक्यादिवृत्तिभ्यो भेदो द्रष्टव्य ।

असयुक्तमृदुवर्णबन्धोऽतिमृदुसदर्भ । सयुक्तकोमलवर्णबन्ध ईषन्मृदुसदर्भ । अविकटपरुषवर्णबन्ध ईषत्प्रौढसदर्भ । प्रागुक्तसदर्भचतुष्टयस्य लक्षणचतुष्टय ज्ञातव्यम् ।

सद्वृत्तिबालविलसद्भृगणप्रभावे
सत्काव्यबन्धगगने तव कीर्तिचन्द्र ।
लोकस्य तापहरणे चतुरो मनोज्ञ
[1]कादम्बनाथ चिरकालमय विभातु ॥१६॥

इति वृत्तिनिश्चयो नाम सप्तम परिच्छेद ।

१ नादञ्जनाथ ।

# शय्यापाकनिश्चयो नाम

## अष्टम. परिच्छेद

अशय्या कामकेली वा कृतिर्लोके न शोभते।
यतस्ततो बुधैर्वाच्यं शय्यालक्षणमुत्तमम् ॥ १ ॥
पदानामानुगुण्य वान्योन्यमित्रत्वमुच्यते।
यत् सा शय्या कलाशास्त्रनिपुणैर्विदुपा वरै ॥ २ ॥
कादम्बेश्वररायबङ्गनृपते. सत्कीर्तिजाल मह-
ल्लोकाभोगविराजितं कविजनैः क्षीराब्धिरित्युच्यते।
कल्पानोकहपुष्पमम्बरनदीनीहारजाल हर-
स्तत् सर्व सदृश न तेन तदिद तस्योपमा गच्छतु ॥ ३ ॥
अपूर्वं भोज्यमप्यत्र नि पाक नैव रोचते।
अपाककाव्यबन्धोऽपि तत पाको निरूप्यते ॥ ४ ॥
चतुर्विधानामर्थाना गाम्भीर्य पाक उच्यते।
द्राक्षापाको[1] नालिकेरपाकोऽय द्विविधो मत ॥ ५ ॥
आलम्ब्य शब्दमर्थस्य द्राक् प्रतीतिर्यतोऽजनि।
स द्राक्षापाक इत्युक्तो बहिरन्त स्फुरद्रस ॥ ६ ॥
आलम्ब्य शब्दमर्थस्य द्राक्प्रतीतिर्यतो न हि।
स नालिकेरपाक स्यादन्तर्गूढरसोदय ॥ ७ ॥

द्राक्षापाको यथा—

रायनाथमनोज्ञाङ्गे लावण्यममृतोपमम्।
आलोकनेन तरुणी पीत्वा पीत्वा प्रमोदते ॥ ८ ॥

---

१. नालिकेरपाकश्च।

# अलंकारनिर्णयो नाम

## नवमः परिच्छेदः

स्त्रीरूप निरलंकार न विभाति यथा भुवि ।
तथा काव्यं ततो ब्रूहि नानालकारसग्रहम् ॥ १ ॥
काव्याङ्गभूतौ शब्दार्थौ श्रितास्चित्रोपमादय. ।
अलकारा. प्रकीर्त्यन्ते काव्यचारुत्वहेतव· ॥ २ ॥
काव्यशोभाकर. काव्यधर्मोऽलकार उच्यते ।
काव्यप्रयुक्तशब्दार्थान्समालम्ब्य प्रवृत्तिमान् ॥ ३ ॥
शब्दार्थयोरलकारौ द्विविधौ परिकीर्तितौ ।
यमकं चित्रवक्रोक्तिरनुप्रासश्चतुर्विध ॥ ४ ॥
शब्दालकृतय प्रोक्ता अर्थालकृतय पुन ।
स्वभावोक्त्यादिभेदेन बहुधा प्रतिपादिता. ॥ ५ ॥
गम्भीरामलसूक्तिरत्नविलसत्सत्कीर्तिफेनाम्बुधे
वैरिध्वान्तविघातदक्षसकलोपायाम्बुजश्रीकर ।
भानो भासुररूपचारुललनारत्युत्सवानन्दकृत्-
कन्दर्पाद्भुतभूषणानि शृणु भो श्रीरायबङ्गप्रभो ॥ ६ ॥
विहाय शब्दालंकारमर्थालकार उच्यते ।
अर्थमाश्रित्य काव्यस्य चारुत्व जनयत्यसौ ॥ ७ ॥
स्वभावोक्त्युपमे रूपकावृत्ती हेतुदीपके ।
उत्प्रेक्षार्थान्तरन्यासौ व्यतिरेकविभावने ॥ ८ ॥
आक्षेपातिशयौ सूक्ष्मसमासौ च लवक्रमौ ।
उदात्तापह्नुती प्रेयोविरोधौ रसवत्तथा ॥ ९ ॥

ऊर्जस्व्यप्रस्तुतस्तोत्रे विशेषस्तुल्ययोगिता ।
पर्यायोक्त सहोक्तिश्च परिवृत्ति समाहितम् ॥ १० ॥
श्लिष्ट निदर्शन व्याजस्तुतिराशीस्समुच्चय ।
वक्रोक्तिरनुमान च विषमावसरौ तथा ॥ ११ ॥
प्रतिवस्तूपमा सार भ्रान्तिमत्सशयौ तथा ।
एकावली परिकर परिसख्या तत परम् ॥ १२ ॥
प्रश्नोत्तरं सकरश्च समुद्देश कृत क्रमात् ।
एतेषा लक्षण लक्ष्य प्रोच्यते च यथाक्रमम् ॥ १३ ॥
येन रूपेण यद्वस्तु वर्तते तस्य वस्तुन ।
तेन रूपेण कथनं स्वभावोक्ति प्रकीर्त्यते ॥ १४ ॥
सक्रिय निष्क्रिय वस्तु यथा जगति वर्तते ।
तथा तद्रूपकथन जातिरित्युच्यतेऽथवा ॥ १५ ॥

सक्रियवस्तुजात्युदाहरण यथा—

कारुण्योपेतचित्त सकलजनतते पालको धैर्यशाली
राजद्राजाधिराजोत्करमणिमुकुटप्रोल्लसत्पादपद्म. ।
राज्यश्रीभारधारी सकलगुणगणोद्भासिपञ्चाङ्गमन्त्र
सिद्धीशो रायवङ्कक्षितिपतिरधुना भाति शक्तित्रयाढ्य ॥१६॥
हरिनीलच्छविभासुरा वनगजोदीर्णोरुमुक्तावली-
कृतदिव्याभरणा वरालिनिभधम्मिल्लास्ता मृगीलोचना ।
वरझिण्टीकृतमालिका निजकराश्लिष्टात्मजातोत्करा
[1]वररायावनिप किरातवनिता पश्यन्ति दूरादिमा ॥ १७ ॥

हीनेषु त्रस्तेषु बालादिषु च विशेषतो रम्या जातिरिति द्वितीयनिदर्शनम् ।

निष्क्रियोदाहरण यथा—

---

१ दुर० ।

अय श्रीरायभूमीशस्त्रिवर्गकलितो महान् ।
शूरो धीरो महात्यागी राजनीतिविशारद ॥ १८ ॥
आरामे रायबङ्गस्य कोकिला श्यामविग्रहा ।
मधुरस्वरसंपृक्ता वसन्ते चित्तहारिण ॥ १९ ॥

कलकण्ठजातिस्वभाववर्णनम् ।

चुम्बति स्पृशति प्राणनायिकां जिघ्रति क्षणम् ।
पिबति प्रेक्षते गाढमालिङ्गति च रायराट् ॥ २० ॥

क्रियास्वभाववर्णनम् ।

रतौ रायमहीनाथे सुखमन्तातिगं महत् ।
कामसिद्धान्तविज्ञान कामिनीचित्तरञ्जकम् ॥ २१ ॥

कलाज्ञानकामसुखगुणस्वभाववर्णनम् ।

कोटीरराजितो हारदिव्यकुण्डलभूषित ।
सिंहासनसमारूढो रायबङ्गो विराजते ॥२२॥

किरीटहारादि[1] विशिष्टद्रव्यस्वभाववर्णनम् । जातिक्रियागुण-द्रव्यस्वभावापेक्षया जात्यलकारश्चतुर्विध । पक्षान्तरमिदम् ।

येनोपमीयते यत्र यत्किंचिद्येन केनचित् ।
प्रकारेणोपमा सा तस्या भेदोऽयं प्रतन्यते ॥ २३ ॥
कादम्बनाथ सा कीर्तिर्धवला कौमुदीव ते ।
प्रतापमण्डलं रक्त भाति बालार्कबिम्बवत् ॥ २४ ॥

धावल्यरक्तत्वधर्माभ्यामुपमेति धर्मोपमा ।

श्रीरायभूप कीर्तिस्ते शारदी कौमुदीव सा ।
तेजोमण्डलमुद्याति बालभास्करबिम्बवत् ॥ २५ ॥

अत्र धर्मनिरूपण न कृतमिति उपमानोपमेयवस्तुमात्रकथनाद् वस्तूपमा ।

---

१. °द्रव्यविशिष्ट° ।

महाभागस्य रायस्य काम दोग्धि महान्कर' ।
कामधेनुरिवाशेषजगदानन्ददायिन' ॥ २६ ॥

कामधेनौ कामदोहकत्वप्रसिद्धि' । विपर्यासेन हस्ते निरूप्यत इति विपर्यासोपमा ।

कादम्बनाथ कीर्तिस्ते शारदी कौमुदीव सा ।
शारदी कौमुदी भाति त्वत्कीर्तिरिव विष्टपे ॥ २७ ॥

परस्परोत्कर्षशसिनी चान्योन्योपमा ।

श्रीराय कीर्तिजालं ते तुल्य क्षीराब्धिनैव तत् ।
अन्येन केनचित् साम्य न प्रयाति जगत्त्रये ॥ २८ ॥

परवस्तुसादृश्य[1]व्यावृत्तेर्नियमोपमा ।

कादम्बेश्वर कीर्तिस्ते चन्द्रातपसमाभवत् ।
अस्ति चेत् सदृश वस्तु तत्समापि विराजताम् ॥ २९ ॥

अन्यसादृश्यसभवकथनादनियमोपमा ।

इन्दुमन्वेति कीर्तिस्ते कान्त्या चाह्लादनेन च ।
भानुमन्वेति तेजस्ते महिमा रागतोऽपि च ॥ ३० ॥

आह्लादनकान्तिमहत्त्वारुणत्वधर्मसमुच्चयात् समुच्चयोपमा ।

श्रीराय भवत कीर्तिर्विशाला भवदाश्रया ।
सुधाकराश्रया ज्योत्स्ना भिदैवेयं न चेतरा ॥ ३१ ॥

भेदान्तरनिरासेन अतिशयोपमा ।

त्वत्कीर्ताविव धावल्य न कौमुद्या तदस्ति चेत् ।
शारदाभ्राभ्रगङ्गादावपि श्रीराय विद्यते ॥ ३२ ॥

साधारणधावल्यस्य अन्यथाकल्पनादुत्प्रेक्षोपमा ।

शारदी कौमुदी सप्तवार्धि यदि विलङ्घते ।
वर्तते यदि नित्य सा धत्ता कीर्तेस्तवोपमाम् ॥ ३३ ॥

---

१ °निर्मितेर्नियमोपमा ।

सप्तवार्धिलङ्घननित्यवर्तनस्य असंभविन' कथनादद्भुतोपमा ।

चकोरनिकरो दृष्ट्वा त्वत्कीर्तिरिति कौमुदीम् ।
उपेक्ष्य भवत कीर्ति याति ज्योत्स्नेति विभ्रमात् ।। ३४ ।।

मोहोपमा ।

सकलङ्क सुधाशु' किं किं साकारं यशस्तव ।
कम्पते जनताचित्तमिति श्रीरायभूपते ।। ३५ ।।

संशयोपमा ।

इन्दुना जीयते पुण्डरीकं त्वत्कीर्तिरेव तत् ।
सकलङ्केन्दुजयिनी पुण्डरीक यतस्तत: ।। ३६ ।।

निर्णयोपमा ।

धवला श्रीमती सर्वजनसंतापहारिणी ।
कादम्बराय कीर्तिस्ते राजते कौमुदी यथा ।। ३७ ।।

श्लेषोपमा ।

साम्बरराज विभाति (च) कौमुद्यत्यन्तवर्धिनो भाति [?] ।
रायनृप कौमुदी वा कीर्तिस्ते सर्वदा भुवने ।। ३८ ।।

उपमानोपमेययो. सदृशरूपशब्दवाच्यत्वात् [१]सतानोपमा ।

क्षीराब्धिना समानापि कीर्तिस्ते शीतभानुना ।
क्षीराब्धि पीडितो देवै. सकलङ्क. सुधाकर. ।।३९।।

निन्दोपमा ।

क्षीराब्धिरमृतस्थ ान चन्द्र सतापहृत् सदा ।
क्षीराब्धिचन्द्रौ त्वत्कीर्त्या सदृशौ राय धीधन ।।४०।।

प्रशसोपमा ।

---

१ In Kāvyādars'a this variety of Upamā is known as Samānopamā ( v.l सन्दानोपमा, सरूपोमा )

क्षीरवाराशिना तुल्या त्वत्कीर्तिरिति मे मन ।
आचिख्यासति दोषो वा गुणो वा भवतु प्रभो ॥४१॥

आचिख्यासोपमा ।

पुण्डरीक चन्द्रबिम्बं त्वद्यशस्त्रितय प्रभो ।
परस्परविरुद्धं भो भाति कादम्बरायराट् ॥४२॥

विरोधोपमा ।

भुवनव्यापिनी कीर्ति भवदीया सदातनीम् ।
पुण्डरीक न शक्नोति जेतु तादृक् क्रमोज्झितम् ॥४३॥

प्रतिषेधोपमा ।

त्वत्कीर्ति स्वाङ्गसजाता क्षीराब्धिजनितो विधु ।
तथापि सम एवेन्दुर्नाधिको रायभूपते ॥४४॥

चटूपमा ।

न कौमुदीय कीर्तिस्ते न भानुस्तेज एव हि ।
न राहु खड्ग एवाय प्रचण्डतरविक्रम ॥४५॥

सुव्यक्तसादृश्यसभवात्तत्त्वाख्यानोपमा ।

क्षीराब्धिशारदाभ्रादिवस्तूनामुपमा सदा ।
विलङ्घ्य भूरिकीर्तिस्ते धत्ते स्वेनैव तुल्यताम् ॥४६॥

असाधारणोपमा ।

क्षीराब्धिशरदिन्द्वादिश्वेतवस्तुप्रभावति ।
एकत्रमिलितेवेय कीर्तिस्ते राय राजते ॥४७॥

वृत्तिरिय कदापि नाभूदिति अभूतोपमा ।

अमावास्यातिथौ रात्रौ शारदी चन्द्रिका यथा ।
कलौ काले तथा भाति कीर्तिस्ते रायमन्मथ ॥४८॥

असंभावितोपमा ।

शरच्चन्द्रनभोगङ्गाशारदाभ्रपयोर्णवान् ।
अन्वेति हारनीहारौ कीर्तिस्ते रायकायज ॥४९॥

वहूपमा ।

शरदिन्दोरिवोत्पन्ना जनितेव पयोम्वुधे ।
शरदभ्रादिवोद्भूता कीर्तिस्ते भाति रायराट् ॥५०॥

विक्रियोपमा ।

इन्दौ ज्योत्स्नेव दुग्धाव्धौ चन्द्रो वा दुग्धवारिधि ।
धरायामिव कीर्तिस्ते भाति श्रीरायभूपते ॥५१॥

मालोपमा ।

श्रित्वा रायनृपं भाति कीर्तिर्लोकत्रये भृशम् ।
श्रित्वा सुधाकर व्योम्नि कौमुदीव सुनिर्मले ॥५२॥

वाक्यार्थेन कश्चिद्वाक्यार्थो यद्युपमीयते सा वाक्यार्थोपमा । सा पुनर्द्विविधा एकेवशब्दा अनेकेवशब्दा इतीयमेकेवशब्दा वाक्यार्थोपमा ।

इन्दोरिव नृसिंहस्य कीर्तिं ज्योत्स्नामिवामलाम् ।
चकोरीव विलोक्यासौ जनता याति समदम् ॥५३॥

इयमनेकेवशब्दा वाक्यार्थोपमा ।

नृसिंहराय कीर्तिस्ते जगत्येकैव राजते ।
एक एव नभोमार्गे ननु भाति सुधाकर. ॥५४॥

इवादिशब्दप्रयोगाभावेऽपि साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा ।

आह्लादनाय देवाना ज्योत्स्ना वसति चन्दिरे ।
नृलोकवर्तिजीवाना कीर्ति- कादम्वभूपतौ ॥५५॥

एकक्रियाविधौ अधिकेन हीनं सदृशीकृत्य कथनं तुल्ययोगोपमा ।

रूपेणाङ्गजवत्कलायुततया शीतांशुवत्तेजसा
तीक्ष्णेनार्कवदद्भुतोन्नततया देवाद्रिवत् सपदा ।
देवाधीशवदुद्धतविक्रमतया पञ्चास्यवद्राजते
गाम्भीर्येण समुद्रवज्जयति स श्रीरायवङ्गो भुवि ॥५६॥

हेतूपमा ।

उद्वेगो विदुषा यत्र नास्ति तत्रोपमा मता ।
लिङ्गस्य वचनस्यापि भेदे हीनेऽधिकेऽपि च ॥५७॥

शारदाभ्रमिवापूर्वा कीर्तिस्ते चन्द्रिका इव ।
भवानिव महामेरुस्त्व सुरेन्द्र इवासि भो ॥५८॥

चतुर्णामेक श्लोक ।

उद्वेगो यदि वर्तेत भिन्नलिङ्गादिके सति ।
तत्रोपमा न वक्तव्या कलागमविशारदै ॥५९॥

बलाकेव शरच्चन्द्रो वेशन्त इव वारिधि ।
ग्रामस्वामीव देवेन्द्र प्रदोपो भानुबिम्बवत् ॥६०॥

एतादृशी सभासद्भिर्न वक्तव्या कदाचन ।
धर्ममात्रविवक्षायामुपमा कीर्त्यते बुधै. ॥६१॥

शृगालवत्पुरालोकी मुनिराजो विराजते ।
अकृतावासको लोके फणीव मुनिसत्तम. ॥६२॥

यथेववाद्यव्ययानि कल्पादिप्रत्ययास्तथा ।
अब्जास्यादिसमासश्च निभादिसमवाचका. ॥६३॥

उपमालकृतावेते शब्दा वाच्या कवीश्वरै ।
स्पर्धते हसतीत्यादि शब्दा वाच्याश्च कोविदै ॥६४॥

यत्रोपचर्यतेऽभेद उपमानोपमेययो ।
तद्रूपकमलंकारस्तस्य भेद. प्रतन्यते ॥६५॥

कान्ता ताटङ्कचक्र विरचितकबरीबन्धकान्तारदुर्गं
लावण्याम्भस्सुदुर्ग घनकुचगिरिदुर्ग नखोदारखड्ग ।
चक्षुर्लीलावलोकामितनुतशरजाल लसद्दृष्टिकेतु
कन्दर्पालापमन्त्रो विलसति चतुरो रायकन्दर्पराज्ये ॥६६॥

समस्तरूपकम् ।

श्रीरायो जलधि सुधागुरमृत मेरु॰ सुरानोकहो
भानु. सिद्धरसो मनोजनृपतिश्चिन्तामणिर्देवराट् ।
भोगीन्द्र सुरधेनुरम्बरमिद काले कलौ सर्वदा
भूत्वा तीर्थकरोऽपि सर्वजनतानन्दाय सवर्तताम् ॥६७॥

व्यस्तरूपकम् ।

कामिन्या॰ पदपङ्कजेद्धमधुपो वक्त्राब्जसंवर्धिता-
म्बोधिस्त्व वरनाभिचारुसरसि श्रीराजहस सदा ।
अङ्कालाननिबद्धभावजगजस्तुङ्गस्तनाद्रिस्थित-
व्याधोऽपाङ्गनिरीक्षणेपुविलसल्लक्ष्योऽसि वङ्गप्रभो ॥ ६८ ॥

समस्तव्यस्तरूपकम् ।

श्रीरायस्य मुखेन्दुस्ते (? श्च) स्मितज्योत्स्नाविराजित. ।
कस्तूरीतिलकाङ्केद्धो भाति सूक्तिसुधारस ॥ ६९ ॥

स्मितादिषु ज्योत्स्नादित्व मुखे च चन्द्रत्वमारोप्य तद्योग्यस्थान-विन्यासादेतत् सकलरूपकम् ।

स्मितज्योत्स्ना मुख धत्ते कस्तूरीतिलकाङ्कनम् ।
सूक्तिपीयूपसारं ते कादम्बेश्वर रायराट् ॥ ७० ॥

मुखस्यावयवाना स्मितादीना ज्योत्स्नादिष्वारोपाद् अवयविनो मुखस्यानारोपाद् अवयवरूपकम् ।

मुखेन्दुस्ते जनानन्दं करोति भ्रूविराजित ।
विशालनेत्रो निटिल धरन् श्रीरायभूपते ॥ ७१ ॥

अत्र भ्रूनेत्रनिटिलानामवयवानामनारोप अवयविनो मुखस्य चन्द्र-त्वारोपाद् अवयविरूपकम् ।

---

१. व्यादोपांग, २. मुखदत्ते ।

मुखं विशालनेत्रं ते कपोलादर्शभासुरम् ।
दृष्ट्वा रज्यति लोकोऽय रायकादम्बनायक ॥ ७२ ॥

अत्र मुखस्यावयविनोऽनारोपाद् एकस्यावयवस्य कपोलस्य दर्पणत्व-मारोप्य नेत्रस्यानारोपाद् एकावयवरूपकम् । एव द्व्यवयवरूपक त्र्यवयवरूपकमित्यादि योज्यम् ।

स्मितज्योत्स्नाविलास ते चारुनेत्रचकोरकम् ।
दृष्ट्वा मुख मुद याति नारीवृन्द नृसिंह भो ॥ ७३ ॥

अत्र ज्योत्स्नाचकोराणा सगे सति युक्तरूपकमिदम् ।

नारीजनो मुख दृष्ट्वा नेत्रेन्दीवरभासुरम् ।
स्मितचन्द्रिकया युक्त मोदते तव रायराट् ॥ ७४ ॥

अत्र चन्द्रिकेन्दीवरयोरयोगाद् अयुक्तरूपकमिदम् ।

मुखेन्दुना कपोलाक्षिभ्रूयुगाधरशालिना ।
त्व रूपकेतुर्नारीणा करोषि रतिसमदम् ॥ ७५ ॥

अवयविनो रूपणादवयवाना रूपणारूपणाद् विषम रूपकम् ।

कादम्बनाथ लोकेऽत्र भवानेव विराजते ।
जगन्मोहकरापूर्वरूपभासुरमन्मथ ॥ ७६ ॥

विशेषणविशिष्टमन्मथारोपणात्सविशेषणरूपकम् ।

रायप्रतापभानुस्ते न मीलयति कैरवम् ।
अस्मत्पतिविभूत्यब्जपण्ड सकोचयत्यहो ॥ ७७ ॥

भानुकार्यस्य अकरणदर्शनादितरकार्यस्य करणदर्शनाच्च विरुद्धरूपकम् ।

तुङ्गत्वेन महामेरुर्मन्मथो रूपसपदा ।
विभूत्या सुरराजोऽसि रायकादम्बनायक ॥ ७८ ॥

तुङ्गत्वादिहेतुना कनकाचलादिरारोप्यत इति हेतुरूपकम् ।

अतिरक्त बालभानु विडम्बयति गर्वत ।
तेजोभानुरयं रक्तो भवतो रायभूपते ॥ ७९ ॥

तेजोभानुबालभान्वोर्गौणमुख्ययो. साधर्म्यदर्शनादुपमारूपकम् ।

अरुण पद्मिनी तेजोभानुर्वीर श्रियं तव ।
आनन्दयति रक्तोऽसौ कदाचित्सर्वदाप्ययम् ॥ ८० ॥

अनयोर्भान्वोर्वैधर्म्यदर्शनाद् व्यतिरेकरूपकम् ।

तेजोभानुस्समो भानुर्यदि तापविधानतः ।
ततोऽन्योऽपि ततस्तस्य न संवादी तवाधिप ॥ ८१ ॥

भानुसाम्यप्रतिषेधादाक्षेपरूपकम् ।

कटाक्षचन्द्रिकापीयं परसंतापहारिणी ।
सतापयति मा देव मत्तापं तव रायराट् ॥८२॥

आक्षेपस्य समाधानकरणात् समाधानरूपकम् ।

सत्कीर्तिचन्द्रिकाहार धृत्वा दिक्कामिनीरति ।
श्रीरायचन्द्रकन्दर्प श्रुत्वा गायति गायति ॥८३॥

रूपकरूपकम् ।

नायं राय [1]सुधासूतिर्नेयं कीर्तिश्च कौमुदी ।
नेद तिलकमङ्कोऽयं नाधरो वटपल्लवम् ॥८४॥

रायनृपत्वादिक निवर्त्य चन्द्रादित्वेन रूपणात् प्रकटीकृतगुणातिशयं तत्त्वापह्नुतिरूपकम् ।

त्रयस्त्रिंशत् समाख्याता उपमालङ्कृतेर्भिदा. ।
विशती रूपकस्यापि भेदा प्रोक्ता मया पुन ॥८५॥
अन्तो नास्ति विकल्पानामुपमारूपकद्वये ।
दिङ्मात्रं कथित शेषो विचार्यो बुद्धिशालिभि ॥८६॥
उक्तस्य पुनरुक्ति स्याद्बहुधावृत्तिरीरिता ।
अर्थावृत्तिः पदावृत्तिरुभयीति त्रिधा मता ॥८७॥

अर्थावृत्तिर्यथा –

रुवन्ति कोकिला. कीरा वदन्ति मधुपा वने ।
वदन्ति राजहंसाश्च रणन्ति [1]श्रीधरेशितु ॥८८॥

१. श्रीधरेशिन ।

पदावृत्तिर्यथा –

श्रीरायक्षितिनाथकीर्तिवनिता भाति त्वदीया भृश
सप्ताम्बोधिषु भाति सर्वगगने सर्वत्र दिग्मण्डले ।
भाति क्ष्मासु च भाति भाति सकले स्वर्गेऽप्यधोविष्टपे
भातीय कविराजचारुवचने भातीयमत्यद्भुता ॥८९॥

उभयावृत्तिर्यथा –

क्रीडयत्यङ्गनालोको भवान् नृपगृहे सदा ।
गुहासु क्रीडयत्यद्य नारीवर्ग रिपुव्रज ॥९०॥

एतदावृत्त्यलकारत्रय दीपकालकारस्थान एव समतम् ।

हिनोति कार्य व्याप्नोति ज्ञाप्य वा हेतुरुच्यते ।
उत्पत्तिसाधनत्वेन ज्ञप्तिसाधनतोऽपि वा ॥९१॥

कारकज्ञापकौ हेतू उत्पत्तिज्ञप्तियोग्यकौ ।
यत्रोच्येते स हेत्वाख्योऽलकारोऽनेकधा मत ॥९२॥

हरिचन्दनहारेण मल्लिकामालया युत ।
प्रीति करोति नारीणा शृङ्गारार्णवचन्द्रमा ॥९३॥

निर्वर्त्यकारकविषयहेत्वलकार ।

आरक्तमालतीमालातिलकाभरणोज्ज्वल ।
आलिङ्ग्य नायिका नाथश्चिन्ताभावाय कल्पते ॥९४॥

अभावरूपनिर्वर्त्यविषयहेत्वलकार । पूर्वो भावविषय ।

रूपातिशयसपन्नो नुतदक्षिणनायक ।
रायबङ्गो व्यधात् स्त्रीणा मन कौतूहलान्वितम् ॥९५॥

विकार्यविषयकारकहेत्वलकार ।

इक्षुचापसमाकार कामसिद्धान्तवेद्यसौ ।
रायबङ्गोऽवनीनाथो नारीरूप प्रपश्यति ॥९६॥

प्राप्यविषयकारकहेत्वलकार ।

तव पल्लववज्रेण [1]मुक्तेनार्धमुधागुना ।
मन सुवोधमित्येव नायिका वक्ति नायकम् ॥९७॥

ज्ञापकहेत्वलकार ।

जातिक्रियागुणद्रव्यसज्ञाभेदाभिधायिना
आदिमध्यान्तवृत्तेन पदेवैकत्रवर्तिना ।
वाक्यार्थनिर्णयो यत्र भवेत्तद्दीपक मत
वहुधा वर्तमानस्य तस्य लक्ष्य प्रतन्यते ॥९८॥

कोकिला रणन कृत्वा नृसिह मोदयन्त्यलम् ।
खेदयन्ति च कान्ताया खण्डिताया मन परम् ॥९९॥

आदिवर्तिजातिपददीपकालंकार ।

चरन्ति मदनोद्याने नृसिहरमणीजना ।
त्वद्वैरिवनितालोका विपिनेषु गुहासु च ॥१००॥

आदिवर्तिक्रियापददीपकालकार ।

रक्त कादम्वनाथेऽस्मिन् कामिनीना मनो भृशम् ।
प्रजानां मित्रलोकाना चित्तं च विदुपामपि ॥१०१॥

आदिवर्तिगुणपददीपकालकार. ।

हारेण रायबङ्गस्य कण्ठस्थेन मनो हृतम् ।
नारीजनस्य शीतांशोर्मयूखोऽपि तिरस्कृत. ॥१०२॥

आदिवर्तिद्रव्यपददीपकालकार ।

चैत्रेण सेवकेनासौ रायबङ्गो विनम्यते ।
पश्चाद्राजाधिलोकस्य वार्ता सम्यग्निरूप्यते ॥१०३॥

---

१ मुक्त

आदिवर्तिसज्ञापददीपकालकार ।

आरामे रायवङ्गस्य नृत्य कुर्वन्ति केकिन ।
प्रेक्षकाणां जनाना च जनयन्ति मनोमुदम् ।।१०४।।

मध्यवर्तिजातिपददीपकालकार ।

रायवङ्गमनोजात नारीलोको विलोकते ।
दिदृक्षावशतो गत्वा देवनारीजनोऽपि च ।।१०५।।

मध्यवर्तिक्रियापददीपकालकार ।

सत्कीर्त्या रायवङ्गस्य नृलोको धवलीकृत ।
पाताललोकसर्वस्वमूर्ध्वलोकोऽपि भामुर ।।१०६।।

मध्यवर्तिगुणपददीपकालकार ।

कादम्बनायको हारभूषितो नृपरायराट् ।
आस्ते सिंहासने दिव्ये पूज्यते च नरेश्वरै ।।१०७।।

मध्यवर्तिद्रव्यपददीपकालकार ।

कादम्बेशेन रायेण डित्थोऽय परिपालित ।
अत एव निजावासे स्थित्वा दीर्घं प्रमोदते ।।१०८।।

मध्यवर्तिसज्ञापददीपकालकार ।

कादम्बरायसदनाद्वहिरुद्यानवासिन ।
वदन्ति मधुरालाप फल चुम्बन्ति ते शुका ।।१०९।।

अन्त्यवर्तिजातिपददीपकालकार ।

कादम्बरायभूनाथ कुसुमायुधसनिभम् ।
दृष्ट्वा मुद स्वकीयोऽपि परकीयोऽपि ढौकते ।।११०।।

अन्त्यवर्तिक्रियापददीपकालकार ।

कादम्बरायनाथस्य सत्कीर्त्या विमलात्मना ।
जायते मानवाना च स्वर्गिणामपि सत्सुखम् ।। १११ ।।

अन्त्यवर्तिगुणपददीपकालकार ।

सिहासने महारत्नकीलिते प्रतिभासते ।
क्रीडत्यारामसदोहे हारालकृतरायराट् ॥ ११२ ॥

अन्त्यवर्तिद्रव्यपददीपकालकार ।

कादम्बनाथ रायेन्द्र लोकते प्रणमत्यपि ।
नानादेशगता वार्ता ब्रूते रम्या कपिध्वज ॥ ११३ ॥

अन्त्यवर्तिसज्ञापददीपकालकार ।

शास्त्र धर्मस्य सवृद्ध्यै स च पुण्यस्य तच्छ्रिय ।
सा श्री रायमहीनाथे सुखस्य खलु जायते ॥ ११४ ॥

इति दीपकत्वेऽपि पूर्वपूर्वापेक्षया वाक्यमाला प्रयुक्तेति मालादीपकम् ।

श्रियं विपक्षवर्गस्य वर्धयन्ति चलानि वै ।
ह्रासयन्ति नृसिहस्य मन्त्रा पञ्च सुनिश्चिता ॥ ११५ ॥

क्रियाया परस्परविरोधाद् विरुद्धार्थदीपकम् ।

मनोवेगयुता सत्त्वा दिव्यलक्षणभूपिता ।
दिवि भान्ति पतङ्गाश्वा भुवि रायतुरंगमा ॥ ११६ ॥

मनोवेगादिधर्मेण[1] उभयेपा समानाना भानुक्रियासबन्धात् श्लिष्टार्थदीपकम् ।

कान्तास्यं वरमीक्षते घनकुचद्वन्द्व स्पृशत्युन्नतं
श्लिष्यत्यङ्ग[2]मनङ्गतन्त्रविदिय श्रीरायवङ्गो दरम् ।
चुम्बत्यङ्गति भावयत्यमति सस्त्रीणाति समोदते
जानीते विनयत्युदेति कुरुते सभाषते भासते ॥ ११७ ॥

---

१. उभस्वाना २ गमन ।

नानाक्रियाणामेककर्तृकारकेण सबन्धादेकार्थदीपकम्[1] ।

अब्ज कूर्ममनङ्गराजशरधि कामेभसद्बन्धना–
लान सिहमपूर्वसारसरसी नाग गिरिं वल्लरिम् ।
शङ्ख शीतकर तिलस्य कुसुम वज्र प्रवाल झप
चापं भृङ्गतति मयूरमसम दृष्ट्वा सदा मोदते ॥ ११८ ॥

श्रीरायवङ्ग इति अध्याहार कर्ता । एतदन्त्यक्रियादीपक प्राक प्रदर्शितमपि भावचमत्कारसभवात्पुन प्रदर्शितम् । अनया दिशा विचक्षणैर्दीपकान्तराण्यभ्यूह्यानि ।

यत्रार्थस्य स्वरूपेण विद्यमानस्य कल्पना ।
अन्यथा तमलकारमुत्प्रेक्षाख्य प्रचक्षते ॥ ११९ ॥
नून प्रायो ध्रुव शङ्के मन्ये सत्यमिवादिभि ।
शब्दै प्रकाश्यते सेयमुत्प्रेक्षा कविपुङ्गवै ॥ १२० ॥
वाच्या प्रतीयमानेति सा चोत्प्रेक्षा द्विधा मता ।
मन्ये शङ्के ध्रुवादीना प्रयोगे प्रथमा मता ॥ १२१ ॥
मन्ये शङ्के ध्रुवादीना शब्दानामप्रयोगत ।
प्रतीयमानोत्प्रेक्षा तु द्वितीया विबुधैर्मता ॥ १२२ ॥
वाच्योत्प्रेक्षा पुन प्रोक्ता षट्पञ्चाशद्विधा बुधै ।
प्रतीयमानोत्प्रेक्षाष्टचत्वारिंशद्विधा मता ॥ १२३ ॥
तदुदाहृतिरन्यत्र बोद्धव्या बुद्धिशालिभि ।
मूलभेदौ निरूप्येते द्वाविमौ सग्रहत्वत ॥ १२४ ॥
शशधरसुरगङ्गा क्षीरवाराशिमुख्यान्
धवलगुणविशिष्टान् केचिदाहु स्वतोऽमून् ।
तव विशदयशोऽशस्पर्शनादर्जुनास्ते
सुकविविनुतवंङ्गक्ष्माप मन्ये सदाहम् ॥ १२५ ॥

---

१ °रूपकम्

स्वभावेन धवलानां चन्द्रादीना कीर्त्यंगस्पर्शनाद् धावल्य-मन्यथा कल्पितम् । इय वाच्योत्प्रेक्षा ।

तव तेजोगुणं लव्धु वालभानुरयं पुन ।
पुन पूर्वाद्रिमारुह्य वसतीव तपस्यलम् ॥ १२६ ॥

क्रियायोगिना इवशब्देन व्यञ्जितोत्प्रेक्षा इयमपि वाच्योत्प्रेक्षा प्रतीयमानोत्प्रेक्षायास्तु (? गुरुत्वा) तिशयाभावादुदाहरण पूर्वशास्त्रे न कृतमिति नास्माभिरपि कृतम् ।

प्रस्तुतीकृत्य यत्किचिद्वस्तुतस्सिद्धये पुन ।
अन्यस्यार्थस्य योग्यो [1]योऽर्थान्तरन्यास एव स. ॥१२७॥

कीर्तिप्रतापौ रायेण भुवनत्रयवर्तिनौ ।
लव्धौ पुण्यवता केन कि कि पुसा न लभ्यते ॥१२८॥

विश्वव्यापिनामार्थान्तरन्यास ।

वक्षोरङ्गनिवासिनी श्रियमिमा कृत्वा मुखाब्जस्थिता
वाग्देवी जयकामिनी विलसिता दोर्दण्डसद्मस्थिताम् ।
कादम्वक्षितिपे स्थिते वरयशस्कान्ता गृहान्निर्गता
लोके स्त्री सहते दिवर्धनगता का वा सपत्नी श्रियम् ॥१२९॥

अयमपि विश्वव्यापी ।

श्रीकामिरायवङ्गोऽय कलौ काले सता मुदम् ।
उत्पादयति शीताशु कलावपि मुदे न किम् ॥१३०॥

विशेपस्यार्थान्तरन्यास. ।

कान्तास्यचुम्वने सक्तो रायेन्द्रो याति समदम् ।
पद्मिन्या पङ्कजासक्तो भ्रमर. किं न तुष्यति ॥१३१॥

---

१ सो

श्लिष्टार्थान्तरन्यास । भ्रमर मधुकर कामुक इति ध्वनि ।
मधुद्रो भ्रमरश्चेति द्वाविमौ कामुकेऽपि च ।

नृसिंहोऽप्यभयं दत्ते श्रीरायो जगता सदा ।
लोके विचित्रशक्तीना वस्तूना शक्तिरीदृशी ॥१३२॥

विरुद्धार्थान्तरन्यास ।

नीतियुक्तोऽपि रायस्य विक्रमो वैरिणा मन ।
सतापयति शत्रूणा पूर्वपाप हि तादृशम् ॥१३३॥

अयुक्तार्थान्तरन्यास ।

तिलकाङ्कितरायास्य मोदयत्यङ्गनाजनम् ।
साङ्कचन्द्रसम तोषवर्धन युज्यते ननु ॥१३४॥

युक्तार्थान्तरन्यास ।

रायप्रतापभानुस्तान् सतापयतु वैरिण ।
कीर्तिचन्द्रो धुनोतीमान् कि किं युक्त सदोपिण ॥१३५॥

युक्तायुक्तार्थान्तरन्यास ।

कीर्तिज्योत्स्नापि तापाय न किं तेजो वनानल ।
धुनोति चन्द्रपक्षश्चेद्वह्निपक्षो दहेन्न किम् ॥१३६॥

विपर्ययार्थान्तरन्यास ।

जगत्यर्थान्तरन्यासभेदा अन्येऽपि सन्ति हि ।
तेषा निदर्शन ज्ञेय यथाशास्त्र विचक्षणै ॥१३७॥

शब्दस्य वा प्रतीतेर्वा [1]सादृश्ये विषये सति ।
वस्तुनोर्भेदकथन व्यतिरेकस्तयो पुन ॥१३८॥

जगन्मोहनरूपेण कुसुमास्त्रस्य सन्निभ ।
रायवङ्कस्ततस्तस्य भेदो दृश्यत्वधर्मत ॥१३९॥

---

१ नादृश्ये

रायवङ्गवर्तिना दृश्यत्वधर्मेण भेदकथनादुभयगतभेदस्य प्रतीतिसिद्धत्वादेकव्यतिरेकालकार ।

यश प्रतापौ भवतो जगद्व्याप्तौ कविस्तुतौ ।
यश शारदचन्द्राभ बालभानुसम. पर ॥१४०॥

यश प्रतापोभयभेदसाधकधावल्यरक्तत्वधर्मद्वयस्य पृथक्कथनादुभयव्यतिरेकालकार ।

उन्नतस्थानवृत्तोऽपि तेजस्व्यपि महानपि ।
राय त्वत्समता याति न भानू राहुपीडित ॥१४१॥

साक्षेपव्यतिरेकालकार ।

धरन्नपि महाभाग्यजनिता पूर्णसपदम् ।
एकदिक्पालनादिन्द्रस्त्वत्तो राय निकृष्यते ॥१४२॥

सहेतुव्यतिरेकालकार ।

उक्तव्यतिरेकालकारपञ्चक शब्दोपात्तसादृश्यम् । बालातप. प्रतापश्च धरतो भेदमीदृशम् । बालातपो भानुवर्ती प्रतापस्त्वयि वर्तते । रक्तत्वधर्मेण प्रतीयमानसादृश्ययोर्बालातपप्रतापयोर्भेदकथनात्प्रतीयमानसादृश्यभेदमात्रव्यतिरेकालकार ।

सकलङ्को निराधार कलाहीनश्च चन्द्रमा ।
श्रीरायबङ्गभूमीश त्वत्सम कथमुच्यते ॥१४३॥

जगदानन्दजनकत्वजगत्सतापहारित्वादिधर्मेण प्रतीयमानसादृश्ययोश्चन्द्ररायवङ्गयोर्मध्ये रायबङ्गस्याधिक्योपेतभेदकथनादाधिक्योपेतभेदलक्षणव्यतिरेकालकार ।

कादम्बरायो मारश्च रूपवन्तौ मनोहरौ ।
राय सिंहध्वजो मारो मीनकेतुर्विराजते ॥१४४॥

---

२ आक्षेपालङ्कार. ।

शब्दोपात्तसादृश्ययो श्रीरायमारयो सदृशध्वजद्वयस्य भेदगमकत्वात्सदृशव्यतिरेकालकार. ।

राय कादम्बनाथोऽय नारीलोलदृगीक्षित ।
कुसुमास्त्रधरो भाति रतिदेवीदृगकित ॥१४५॥

प्रतीयमानसादृश्ययोर्मारराययो सदृशरतिलोचननारीलोचनानां भेदगमकत्वादपर सदृशव्यतिरेकालकार ।

सुरराजश्रियो रम्य भोगीन्द्रमुखलालितम् ।
रायस्य राज्य क्रमते प्रजापालनभासुरम् ॥१४६॥

रायराज्य प्रजापालनभासुरत्वेन राज्यजातेस्तुल्य सुरेन्द्रविभूतिभोगीन्द्रसुखलालितत्वेन भिन्नमिति सजातिव्यतिरेकालंकार ।

प्रकृतं कारणं त्यक्त्वा यत्र हेत्वन्तर मतम् ।
विभाव्यते स्वभावो वा यत्र सा हि विभावना ॥१४७॥

[2]अचन्द्रा चन्द्रिका कीर्ति प्रतापो भानुना विना ।
बालातपो मुख चन्द्रो क्षीराब्धेस्ते नृसिह भो ॥१४८॥

चन्द्रादिकारण परित्यज्य कीर्तिचन्द्रिकादे श्रीरायनामकारणान्तरकल्पनात्कारणान्तरकल्पनाविभावना ।

अकारणमहाबन्धुरकारणसहृद्भवान् ।
अकारणदयालुश्च जनाना रायभूपते ॥१४९॥

अकारणपदेन हेतु निराकृत्य स्वभावेन बन्धुत्वादिकथनात्स्वभावविभावना ।

प्रतिषेधस्य कथन प्रतीतिर्वा प्रजायते ।
स यत्राक्षेप इत्युक्तस्त्रिधा कालत्रयाश्रयात् ॥१५०॥

---

१ °भास्करम् २ आचन्द्रा ।

रायो रणाङ्गणेऽरीणा जलं प्रविशता तृणम् ।
दशता कृतवल्मीकारोहणान्न व्यधाद्वधम् ॥१५१॥

अतीताक्षेपालंकार ।

कुतो ललाटे तिलक करोति नृपरायराट् ।
साङ्कमिन्दु स्वकीयस्य सममिच्छति कि कृती ॥१५२॥

वर्तमानाक्षेपालकार ।

सापराधो नृपो राय. कान्ताडम्बरकोपत. ।
भीत्वा रतिगृह रम्य सोत्कण्ठोऽपि न यास्यति ॥१५३॥

अनागताक्षेपालकार ।

कीर्तिचन्द्रातपे शैत्य न सत्यं तव रायराट् ।
यदि सत्य विपक्षाणां सतापयति किं पुन ॥१५४॥

शैत्यविरोधिना संतापकर्मणा केनचित्पुसा शैत्यधर्मस्य आक्षिप्तत्वाद्धर्माक्षेपालकार ।

रायवङ्गस्य कीर्तिर्वा नेति को वुध्यते भिदाम् ।
दृश्यते शुद्धधावल्यप्रभा जगति नाश्रय· ॥१५५॥

धावल्यप्रभालक्षण धर्ममाश्रित्य कीर्तिरूपो धर्म्याक्षिप्त इति धर्म्याक्षेपालंकार· ।

रायं कल्पान्तक युद्धे दृष्ट्वापि [1]रिपवोऽवशा ।
भय न यान्ति वल्मीकतृणपानीयसश्रिता ॥१५६॥

भीते कारणं वधो वल्मीकाद्याश्रितैर्वैरिभिर्निपिद्ध इति कारणाक्षेपालकार ।

रायस्यायल्लके ज्योत्स्नाहिमाम्वुमलयानिल- ।
कर्पूरसगमेऽप्यस्या शीतभावो न जायते ॥१५७॥

---

१ रिपदोवदा ।

चन्द्रातपादिवस्तुसगमे कारणे सनिहितेऽपि शैत्यकार्य न जातमिति कार्याक्षेपालकार ।

रणे गृहीतो रायेण रिपुवर्गो वदत्यलम् ।
वधाभिलाषो यदि ते हन्तव्यो रणभैरव ॥१५८॥

हन्तव्य इत्यङ्गीकारमुखेनैव काक्वा स्ववधो निषिध्यत इत्यनुज्ञाक्षेपालकार ।

कलौ काले महादुष्टॉल्लुण्टाकादिकदुर्जनान् ।
निराकरोति श्रीराय प्रभुत्वेनैव राजते ॥१५९॥

आदिपदेनैव दुर्जननिपेधात् प्रभुत्वाक्षेपालकार ।

स्थितिर्वा ते गतिर्वा ते रमणास्तु ममाकृति ।
द्रष्टु न शक्यते पश्चात्तदेतत् सुविचार्यताम् ॥१६०॥

इति वदन्त्या नायिकया सादर वचन प्रयुक्तमिति सामर्थ्यादनादरो निषिद्ध इति अनादराक्षेपालकार ।

पश्य पश्यसि चेदन्यामस्तु तद्दर्शन शुभम् ।
यावदागमन तावत्तच्चिन्तास्तु मम प्रिय ॥१६१॥

इति वदन्त्या कान्तयाशीर्वचनमुखेन काक्वा कान्तगमन निषिध्यत इत्याशीर्वचनाक्षेपालकार ।

दास्यामि हार गन्तव्य त्वया तुभ्य नमो नम ।
अन्यथा वामपादो मे तव वुद्धि वदिष्यति ॥१६२॥

इति ब्रुवाणयातिरक्तया कान्तया गमनसहायताकरणव्याजेन प्रियप्रयाण निपिद्धमिति साचिव्याक्षेपालकार ।

याहि याहि निजेश त्व मम यत्नस्तथैव भो ।
तव प्रयाणे पाथेय प्रागेव विहित मया ॥१६३॥

प्रियगमनकार्ये यत्नकरणव्याजेन प्रियया निजेशगमन निषिद्धमिति यत्नाक्षेपालकार ।

क्षणालिङ्गनविघ्नाय रोमहर्षाय कुप्यता ।
प्रेम्णा निषिद्धं गमन तवेश न मया पुन ॥१६४॥

प्रेमाधीनतया कान्तया निजेशगमनं निषिद्धमिति परवशाक्षेपालकार. ।

पुनरुज्जीवनोपाय सजीवनमहापदम् ।
दत्त्वा याहि निजेश त्वं कन्दर्पो मा हनिष्यति ॥१६५॥

जीवनोपायदुर्घटत्वनिवेदनव्याजेन निजेशगमनं निषिद्धमित्युपायाक्षेपालकार ।

यामीति वचन नाथ ते मुखान्निर्गत वरम् ।
याहि वा वस [1]यत्त्वत्तो मम किंचित् फल न हि ॥१६६॥

अत्यधिकस्नेहया [2]सकोपया सुकान्तया कान्तगमनं निषिद्धमिति रोषाक्षेपालकार ।

स्पृष्ट मया न ताम्बूल न दृष्टं स्वदित न वा ।
[3]शून्य तवास्तु नष्टं वा मार्जारो वात्तु मत्प्रिय ॥१६७॥

प्रागनागत्य पुनरागतेन जीवितेशेन सहैवमुक्त्वा कान्तया ताम्बूलस्य सानुक्रोश दोषोद्भावन कृतमित्यनुक्रोशाक्षेपालकार ।

कलौ काले प्रजा धर्म नाचरन्ति न चासते ।
न्यायमार्गे अहो कष्ट [4]मनुशोचति हि रायराट् ॥१६८॥

धर्मपालचूडामणिना रायधरणीशेन कलौ प्रजाना धर्माचारव्यावृत्त्यादिक दृष्ट्वा पश्चात्ताप कृत इत्यनुशयाक्षेपालकार ।

---

१. मत्त्वतो २. सकोपयासि कान्तया ३. शून्यास्तत्रास्तु ४. मनुशोषते ।

विपक्षतमसा शत्रौ सुहृत्पद्मप्रकाशके ।
रायप्रतापमार्तण्डे सति कि भानुना भुवि ॥१६९॥

साम्य दर्शयित्वा मुख्यभानुर्निषिद्ध इति श्लिष्टाक्षेपालकार. ।

किमिय चन्द्रिकाहोस्वित् कीर्ति कि रायभूभुज ।
रात्रावह्नि च दृश्यत्वात् कीर्तिरेव न चन्द्रिका ॥१७०॥

सदादृश्यत्वधर्मेण चन्द्रिका निषिध्यते इति सशयाक्षेपालकार ।

कृत्वापि दान जगतो न तृप्यति हि रायराट् ।
इष्ट दत्त्वापि भुवने न तृप्यति सुरद्रुम ॥१७१॥

अर्थान्तराक्षेपालकार ।

कादम्बराय कीर्तिस्ते कविराजैर्न वर्ण्यते ।
वाचामगोचरत्वात्ता दृष्ट्वा नन्दन्ति मानसे ॥१७२॥

हेत्वाक्षेपालकार ।

कादम्बक्षितिपस्य तीर्थममले गौरीशगौरं हृदि
श्रीनाथामरनाथ कर्ण नृपते पुष्पायुध क्ष्मापते ।
भोगीन्द्रार्जुन धर्मराजनृपते भानो सुधाशो गुरो
वार्धे मेरुगिरीन्द्र चन्दनतरो भूमौ नभो मा कुरु ॥१७३॥

गर्वरूपधर्मनिषेधाद् धर्माक्षेपालंकार । भावचमत्कारसभवात् पुनरप्युक्त ।

अन्ये विकल्पा द्रष्टव्या आक्षेपाणा विचक्षणै ।
मया शास्त्रानुसारेण दिग्मात्र संप्रदर्शितम् ॥१७४॥

[1]मनोवद् वक्तुरिष्टस्योत्कर्ष वक्तु निरूप्यते ।
यत्रासभवि सा सद्भिरुच्यतेऽतिशयाभिधा ॥१७५॥

---

१ मनो वक्तुमिष्ट° ।

तव कीर्तिमहालता जगत्सुरभूजाग्रगता स्तुतादिकैः ।
अवलम्बपदं विलोकते यवनस्तुत्यनृसिंहभूपते ॥१७६॥

कीर्तेरुत्कर्षकथनार्थमसंभविलोकाग्रगमनं लोकमतिक्रम्य गमनेच्छया विलोकनं च कथितमित्यतिशयोक्तिः ।

किमास्यं शारदं चन्द्रबिम्बं किं हसनं तव ।
किं किं ज्योत्स्नेति रायस्य संदेहो जायते नृणाम् ॥१७७॥

आस्यहसनयोरुत्कर्षकथनाय वदनचन्द्रयोर्हसनचन्द्रिकयोर्भेत्तुं शक्यत्वेऽपि संशयपूर्वको विवेचनाभावो संभवी कथित इति संशयातिशयोक्तिः ।

रणभेरीरवं श्रुत्वा रायस्य जयशंसिनम् ।
जयं निश्चित्य दिक्कन्या गायन्ति जयकामिनीम् ॥१७८॥

निश्चयातिशयोक्तिः ।

महाकवीनां विस्तीर्णं हृदयं जगदद्भुतम् ।
लोकातिवर्तिसत्कीर्तिविक्रमादरतां गतम् ॥१७९॥

अद्भुतातिशयोक्तिर्विरोधातिशयोक्तिर्वा ।

आकारेणेङ्गितेनापि सूक्ष्मत्वाल्लक्ष्यते यदा ।
तदार्थो यत्र संप्रोक्तः सूक्ष्मं इत्याख्यया बुधैः ॥१८०॥

सुरतसदननार्या रायबङ्गोऽनुयुक्तः
क्व गत इति तदासौ भीतिमान् पृष्ठतोऽगात् ।
निजपतिहृदयं साकारभेदेन बुद्ध्वा
वस वस वस तत्रैवेति वाचं ब्रवीति ॥१८१॥

प्रियया प्रियेण कृतो नायिकान्तरसंगमः प्रियस्य पृष्ठगमनाकारेण सभयेन सूक्ष्मं ज्ञातं इति सूक्ष्मालंकारः ।

१ °रीत्या°

यत्र प्ररूपित वस्तु स्वसमानस्य वस्तुन ।
विदधाति प्रतीर्ति सा समासोक्ति सता मता ॥१८२॥

भो भो कल्पतरो त्वमत्र भुवने पुष्णासि सर्वान् जना-
नाकल्प तव कीर्तिवस्तु विदुषा स्तुत्य पर तिष्ठतु ।
काकोलूकपरेण निम्बतरुणानेनालमन्ये च ये
वृक्षा सन्ति बहुत्वधर्मसहितास्ते सन्तु मा सन्तु वा ॥१८३॥

अत्र कथित कल्पतरु स्वसदृश रायबड्ग ज्ञापयति, निम्बतरु स्वसमान नीतिशून्यनृप, परे च तरव स्वसदृशभूपबाहुल्य सूचयन्ति तत्तद्विशेषणमुक्तानुक्तयो सममिति समानविशेषणभिन्नविशेष्य-समासोक्ति ।

सतापहारी चन्द्रोऽय कलामृतविराजित ।
अकलङ्क सदोद्भासी मया पुण्येन लभ्यते ॥१८४॥

अत्र कथितश्चन्द्र स्वसम रायबड्ग गमयति, सतापहरण कलामृत-विराजन चन्द्रे राये च समम्, अकलड्कत्व सदाभासन रायनृपे न चन्द्र इति भिन्नाभिन्नविशेषणसमासोक्ति ।

सनिमेष सुराधीशो निष्कलङ्क सुधाकर ।
वदन्कल्पतरुर्लब्ध केनचिद्बहुपुण्यत ॥१८५॥

अत्र रायनृपसमानानामिन्द्रादीना निर्निमेषत्वादिधर्मं निराकृत्य सनि-मेषत्वाद्यपूर्वधर्म निरूप्य रायबड्गप्रतीतिसमर्थनादपूर्वसमासोक्ति ।

अस्यालंकारस्य अन्यापदेश इति नामान्तर वक्तव्यम् ।

अर्थस्य गोपन वाचा चेष्टया वा प्रकाशनम् ।
लेशतो लव इत्युक्त सद्भिर्निन्दास्तुति-परै ॥१८६॥

पूर्वाद्रि गतबालभानुमधुना तेजस्विन वीक्ष्य तं
पञ्चास्यासनयातबड्गनृपतौ कोप प्रयाते सति ।

शैलाग्रे स्थितवानहं तव गुणं तेजोऽभिधानं तपो
लब्धु वै विदधामि चारुवचसा प्रासादयत्त नृपम् ॥१८७॥

वचोगोपनलेशालकार । निन्दास्तुतिर्वा ।

सेवार्थमागतमहाधरणीश्वराणा-
मालोकनेन करुणास्मितभाजनेन ।
सिहासने स्थितवता नृपकुञ्जरेण
चेत प्रसत्तिरमला प्रकटीकृताभूत् ॥१८८॥

चेष्टाप्रकाशनलेशालकार ।

उक्ताना यत्र वाच्याना योगो वाच्यान्तरै सह ।
क्रमेण कथित सोऽत्र क्रमालकार उच्यते ॥१८९॥

रूप वचोऽधररस स्तनकुम्भयुग्म
नि श्वासगन्धविषय तरुणीतनुस्थम् ।
आलोकनश्रवणपानसमागमोरु-
घ्राणक्रियाभिरनुभूय सुखी नृपोऽभूत् ॥१९०॥

क्रमालंकार ।

भ्रूलोचनकटाक्षान् वै रायस्यालोक्य कामिनी ।
चापभृङ्गशरान्मत्वा जायते भयविह्वला ॥१९१॥

अयमपि क्रम ।

वृद्धेर्महत्त्व भूतेर्वा तन्यते यत्र कोविदै ।
उदात्त तमलकार वदन्ति कविपुङ्गवा ॥१९२॥

काले कलौ स्वहितमङ्गलचारुबुद्ध्या
पाति प्रजा करुणया न बिभेति शत्रो ।
शीतांशुभानुसमनीतिपराक्रमाभ्या
जेजीयतेऽरिनृपतीभघटामृगेश ॥१९३॥

---

१ प्रच्छन्नवास्ता कुद ।

बुद्धिमहत्त्वोदात्तालंकार ।

आस्थानमण्डपगते सुरशैलतुङ्गे
सिहासने मदनरूपनृसिहवङ्ग ।
आस्ते सता फणिपतिर्वरसार्वभौमो
गीर्वाणराज इति वाखिलमन्यमान ॥१९४॥

ऐश्वर्यमहत्त्वोदात्तालकार ।

सत्यरूपमपह्नुत्य यत्रान्यार्थो निरूप्यते ।
अपह्नवमलकार तमाहु काव्यकोविदा ॥१९५॥
अय श्रीरायवङ्गो न क्षीरवाराशिरेव वै ।
अन्यथा वरगाम्भीर्यगुणशाली कथ भवेत् ॥१९६॥

रायवङ्गत्वलक्षण स्वरूपमपह्नुत्य क्षीराम्बुधित्वस्य पररूपस्य निरूपणात् स्वरूपापह्नवालकार ।

अय श्रीरायवङ्गो न समुद्रनवनीतक ।
कादम्बक्षीरवाराशेरुत्पत्तिर्घटते कथम् ॥१९७॥

अयमपि पूर्व एव ।

अय श्रीरायवङ्गो न सुरभूजोऽन्यथा कथम् ।
समस्तजनसंकल्पदायको जाघटीत्ययम् ॥१९८॥

अयमपि तथैव ।

युद्धरङ्गत्रिनेत्रोऽय रायवङ्गमहीपति ।
कल्पान्तसमवर्त्येव किलान्यत्र दयानिधि ॥१९९॥

दयानिधित्व परेऽभ्युपगम्य स्वेषु रिपुवर्गेण तस्य प्रलयान्तकत्वदर्शनाद्विपयापह्नवालकार ।

उपमालकृतौ पूर्वमुपमापह्नव स्मृत ।
अन्यापह्नुतिभेदाना विस्तरो लक्ष्यता वुधै ॥२००॥

---

१ कादम्बक्षीरवाराशो उत्पत्ति ।

यत्र प्रियतरा वाणी प्रेमाधिक्यप्रकाशिनी ।
निरूप्यतेऽसौ विद्वद्भि: प्रेयोऽलकार उच्यते ॥२०१॥
तरुणि चरणघातो मल्लिकापुष्पसङ्ग-
स्तव घनकुचघात कौमुदीस्पर्शकल्प ।
सरसमधुरकाञ्ची दामवन्ध. प्रवन्धो
वदति सुरतकेल्या रायवङ्गक्षितीन्द्र ॥२०२॥

प्रेयोऽलकार ।

उक्तार्थाना विरुद्धत्वं यत्र वाक्ये परस्परम् ।
शब्दार्थविहित नास्ति तत्त्वत स विरोधक ॥२०३॥
कलाधरो न शीतांशुस्तेजस्व्यपि न भास्कर ।
अभीष्टदो न मन्दारो रायवङ्गो गुणाम्वुधि ॥२०४॥

शब्दकृतविरोध. ।

उत्तुङ्गोऽपि न मेरुर्न तापहृच्चन्दनद्रुम. ।
श्रीमानपि न गोविन्द कादम्वाम्बुधिचन्द्रमा. ॥२०५॥

अयमपि शब्दकृत एव ।

दयालुना पुण्यजनेन चापि देवेन सुज्ञातगुणेन तेन ।
श्रीरायवङ्गप्रभुणा विपक्षा जिता सुलोका परिपालिताश्च ॥२०६॥

अयमपि तथैव ।

श्रीरायक्षितिनाथ येन समये प्रस्थानभेरी महा-
कोणेन प्रहता जना रिपुहरे भीत्वाध्वनन्त्यद्भुतम् ।
लोकेषु ध्वनिमत्सु तेषु धरणीभृद्भिस्तयो दिग्गज-
व्रातस्य श्रुतयो विमानततयो भिन्ना वितीर्णा भृशम् ॥२०७॥

अयमर्थकृतविरोधालंकार ।

शृङ्गारादिरसाना तु नवाना यत्र कथ्यते ।
रूपोत्कर्षं पृथक्सोऽप्यलकारो रसवान् भवेत् ॥२०८॥

तरुण्या देहलावण्ये स्नात्वा स्नात्वा प्रमोदते ।
अधरामलपीयूष पीत्वा पीत्वामरायते ॥२०९॥

शृङ्गाराख्यरसवदलकार ।

रणसद्मनि शत्रूणा वर्ग दत्त्वा बलि धराम् ।
सागरान्ता विजित्यायं रायशूरो विराजते ॥२१०॥

युद्धवीररसाख्यरसवदलकार ।

कृत्वा तृप्त जगत्सर्वं सुराग विपिनद्रुमम् ।
कृत्वा दानेन महता पात्र नास्तीति मन्यते ॥२११॥

रायबङ्ग इति कर्तुरध्याहार । दानवीररसाख्यरसवदलकार ।

दृष्ट्वा शान्तिजिन नत्वा स्तुत्वा स्मृत्वा समर्च्य च ।
आनन्दक्षीरवार्राशौ रायबङ्गो निमज्जति ॥२१२॥

धर्मवीररसाख्यरसवदलकार. ।

आयल्लकानलो दग्ध्वा तन्वङ्गी पीडयत्यहो ।
इति दूतीवच श्रुत्वा करुणाब्धौ निमज्जति ॥२१३॥

राय इति कर्ता । करुणाख्यरसवदलकार ।

मक्षिकाजालपूयार्द्रव्रणकोटियुतान् रिपून् ।
भिक्षार्थमागतान् दृष्ट्वा जनो वमति राय ते ॥२१४॥

बीभत्साख्यरसवदलकार ।

पश्चाद्गतेशबिम्ब सालोक्य चुम्बति दर्पणे ।
मत्वा निजेश श्रीराय दृष्ट्वा हसति कौतुकात् ॥२१५॥

हास्याख्यरसवदलकार ।

रायारामस्थितान् वृक्षान् स्वनन्दनगतान् बहून् ।
दृष्ट्वावचिनुते पुष्पाण्यमरेन्द्रो विलासतु ॥२१६॥

अद्भुताख्यरसवदलकार ।

रायस्य दोर्बल स्मृत्वा रिपुवर्गो गुहास्थित ।
भीतो गच्छामि कुत्रेति भयज्वरगतो मृत ॥२१७॥

भयानकाख्यरसवदलंकारः ।

कादम्बरायभूपस्य क्रोधाग्नौ विक्रमार्चिपि ।
दग्धवैरीन्धने लोकं व्याप्ते शुष्यन्ति वार्धयः ॥२१८॥

रौद्राख्यरसवदलंकारः ।

देवसेवनकालेऽस्य रायवङ्गस्य चेतसि ।
शीते शान्तरसे व्याप्ते शीतिभूतं जगत्त्रयम् ॥२१९॥

शान्तरसाख्यरसवदलंकार· ।

रसवत्त्व गिरा लोके रसैर्नवभिरुच्यते ।
रसैरष्टभि[1]रित्येके शान्तवर्ज्यैर्वदन्त्यलम् ॥२२०॥
उत्कर्षो यत्र गर्वस्य कथ्यते मानशालिनाम् ।
तमलकारमूर्जस्विनामानं मन्यते वुध. ॥२२१॥
पीत वारिधिसप्तक जगदिदं हस्तेन संचारितं
भोगीन्द्रस्य किरीटवर्तिमणय शीर्णीकृता. पर्वता ।
सचूर्णा विहिता मयेति कदने यो वक्ति गर्वं निजं
त जित्वा नृपकुञ्जरो विजयते कादम्बवशोत्तम. ॥२२२॥

ऊर्जस्व्यलकार. ।

यत्राप्रस्तुतवस्तूनां वर्णना क्रियते जनै ।
निर्विण्णमानसैस्तच्चाप्रस्तुताशंसनं विदु. ॥२२३॥
हरिततृणं[2]भक्षिणोऽमी हरिणा हर्षैर्वसन्ति पीतजलाः ।
इति वक्ति रायवङ्गक्षितिपतिशत्रुव्रजो [3]वने सोऽयम् ॥२२४॥

रायनृपतिना तिरस्कृतत्वान्निर्विण्णमानसेन शत्रुवर्गेण हरिणानामप्रस्तुताना प्रशसा कृता यस्मात्तस्मादप्रस्तुतप्रशसालंकार ।

---

१ रित्येते । २ भक्षिणो मि हरिणा हर्षैर्वसन्ति सीतजला. । ३. वनसोयम् ।

देशोऽयं स्वर्गभूमिर्नृपसदनमिद देवराजस्य गेहं
कान्तेयं कामभार्या मदभरितगजो दिग्गज सार्वभौम ।
अश्वोऽयं शक्रसप्ति सुरतरुरमलो जैनधर्मो जिनेन्द्रो
देवोऽयं रायवङ्गक्षितिपतिरधुना दिव्यपुण्यो विभाति ॥२२५॥

येन केनचित् कारणेन निर्विण्णचित्त कश्चित् पुमानस्य नृपस्य विभूतिं धृत्वा वर्णयति तस्मादियमपि अप्रस्तुतप्रशसा ।

यत्र वैकल्यकथन गुणादीना विधीयते ।
विशेषदर्शनार्थं सा विशेषोक्तिर्निरूप्यते ॥२२६॥

न शीतोऽपि यशोराशिर्जगत्ताप हरत्यसौ ।
नोष्णोऽपि विक्रम शत्रून् रायस्य दहति ध्रुवम् ॥२२७॥

शैत्यगुणवैकल्येऽपि जगत्तापहरणविशेष. । उष्णतागुणविकलत्वेऽपि वैरिदहनविशेषो यतस्ततो गुणवैकल्यविशेषोक्ति ।

न कोकिला न वीणा वा न कीरा न च किन्नरी ।
कान्ता तथापि रायस्य चेतो हरति गानत ॥२२८॥

कोकिलादिजातिवैकल्येऽपि कान्ता स्वरेण रायचेतोहारिणी यतस्ततो जातिवैकल्यविशेषोक्ति ।

न कुप्यति न वध्नाति काञ्च्या कर्णोत्पलेन सा ।
न ताडयति रायेन्द्र भय नयति कामिनी ॥२२९॥

कोपनादिक्रियावैकल्येऽपि भयप्रापणमिति क्रियावैकल्यविशेषकथनम् ।

सरससुरतयुद्धे विक्रमो नास्ति यस्याः
परमनिशितशस्त्र नास्ति खेटादिकं च ।
मदनतुमुलयुद्धाधीशकादम्बनाथ
जयति सरसविद्या सा सती चित्रमेतत् ॥२३०॥

शस्त्रखेटादिद्रव्यवैकल्येऽपि जयति विशेषकथनमिति द्रव्यवैकल्यविशेषोक्ति ।

न सन्मित्रं न सत्संगो न सम्यग्धर्मदेशना ।
तथापि पुण्यवान् रायो वसत्यानन्दसागरे ॥२३१॥

सन्मित्रादिसुखकारणवैकल्येऽपि पुण्यवानिति हेतुगर्भितविशेषणाद्धेतु–विशेषोक्ति ।

अन्येऽपि भेदा॰ सन्त्येत्र विशेपोक्तेर्विदांवरै॰ ।
अभ्यूह्या शास्त्रमार्गेण विस्तरो न मयोच्यते ॥२३२॥
यत्र किंचित्समीकर्तुं युज्यते केनचित् क्रिया ।
एककाला समासो हि तुल्ययोगाभिधो भवेत् ॥२३३॥
स्तवनं निन्दनं चापि समाश्रित्य द्विभेदभाक् ।
अलंकारस्तुल्ययोग कथ्यते विदुपा वरै. ॥२३४॥
भरतस्सगरश्चक्री श्रेणिको वङ्गभूपति ।
श्रोतृमुख्यपदं प्राप्ता भवन्ति भुवनत्रये ॥२३५॥

स्तुतिपरतुल्ययोगितालंकार. ।

चिन्तामणि. कामधेनू रायवङ्ग॰ सुरद्रुमः ।
परोपकारे निरता इति रूढिर्जगत्त्रये ॥२३६॥

अयमपि पूर्व एव ।

रायवङ्गक्षितीशस्य शत्रुजातश्रियः क्षणम् ।
सुरचापश्रियो विद्युन्मालालक्षा न चासते ॥२३७॥

निन्दापरतुल्ययोगितालंकार ।

यत्र प्ररूप्यमाणेन वस्तुना तत्परत्वत ।
इष्टार्थो गम्यते तद्धि पर्यायोक्त सता मतम् ॥२३८॥
अस्मद्वैरिपुर त्वया वलपते श्रीमद्विधेय भृशं
[1]कादम्बाम्बुधिचन्दिरे निगदतीत्येवं बलाधीश्वरः ।

१. कादम्बाम्बुनि चन्दिरे

नानावज्रभुजङ्गकाञ्चनशिवामन्दारराजामरी—
स्त्रीबिम्बार्कमय ह्यदान्मदनकान्तावासमप्यद्भुतम् ॥२३९॥

पर्यायोक्तालकार ।

गुणाना कर्मणा यत्र सहभाव प्ररूप्यते ।
सहोक्तिनामक प्राहुस्तमलकारमुत्तमा ॥२४०॥
रायस्य कीर्त्या धवल शत्रुकान्ताजन सह ।
[1]विक्रमेणारुण सार्धं तत्कान्ताजनलोचनम् ॥२४१॥

गुणसहभावकथनसहोक्ति ।

श्रीरायक्षितिनाथ विक्रमगुणे नामा सदा वर्धते
वीरश्रीशरदभ्रकीर्तिवनिता त्यागेन साक तव ।
लक्ष्मी पुण्यपदेन साकममलज्ञानेन वाणी समं
कोशेनाहवदक्षदण्डनिकर सग्रामरङ्गोद्धुर ॥२४२॥

क्रियासहभावकथनसहोक्ति । अथवा

कार्यकारणयोर्यत्र वक्तु युगपदुद्भव. ।
कार्योत्पादनसामर्थ्यं ता सहोक्ति प्रचक्षते ॥२४३॥
पुण्येन सार्धमाधत्ते धर्मं यानेन दिग्जयम् ।
त्यागेन कीर्तिं शौर्येण वीरलक्ष्मी च रायराट् ॥२४४॥

कार्यकारणसहजन्मकथनसहोक्ति ।

यत्राधत्ते पुनर्दत्त्वा किंचित्किंचित् समं न वा ।
तामाहुर्निपुणा लोके परिवृत्तिमलक्रियाम् ॥२४५॥
सुरलोके पुरी दत्त्वा[2]रिपुभ्य स्त्रीविराजिताम् ।
नरलोके पुरी हृत्वा तादृशी भाति रायराट् ॥२४६॥

सदृशार्थपरिवृत्ति ।

---

१ विक्रमेणारुण सार्द्धं···· जनलोचनम् २ रिहृभ्य ।

ज्ञानं स्वीकुरु वङ्गराज विनयं दत्त्वा गुरुभ्यः सदा
पुण्यं स्वीकुरु देयवस्तुनिकरं दत्त्वा गुरुभ्यः सदा।
वैरिभ्यः सुरलोकसौख्यपदवीं दत्त्वा तदीयं महा—
देशं स्वीकुरु युद्धरङ्गरमणीप्राणेश भूमीश भोः ॥२४७॥

विसदृशार्थपरिवृत्तिः ।

कार्यमारभमाणेन दैवात्तत्साधनागमः ।
लभ्यते यत्र तत्प्राहुरलंकारं समाहितम् ॥२४८॥
कोपं निवारयितुमिष्टनिजाङ्गनायाः
प्रारब्धवान् नृपतिकुञ्जरवङ्गनाथः ।
तावत् सुधांशुरुदयाद्रिमुपैति पूर्णो
रोरौति कोकिलगणो भगणश्चकास्ति ॥२४९॥
एकवाक्यमनेकार्थं यत्र श्लिष्टं तदुच्यते ।
अभिन्नपदमुद्दिष्टं श्लिष्टं भिन्नपदं द्विधा ॥२५०॥
[1]देवोऽयमम्बरोद्भासी लोकाह्लादः कविस्तुतः ।
मरुत्सहायो राजाग्रे भासते भुवनोत्तमः ॥२५१॥

अभिन्नपदश्लिष्टम् ।

सदैव बलसंपन्नो न दीनो जडसंग्रहः ।
कविरम्यो रायवङ्गो राजते मन्दरागतः ॥२५२॥

भिन्नपदश्लिष्टम् ।

व्यतिरेकाद्यलंकारे श्लेषाः प्राग् दर्शिताः परे ।
अन्ये केचन दृश्यन्ते श्लेषास्तत्कथनं यथा ॥२५३॥
आह्लादयन्ति[2]रायं च सानुरागाः प्रजाः प्रजाः ।
[3]साकूतं रक्षिता वृद्धाः करमार्दवलालिताः ॥२५४॥

---

१ देवोऽयमम्बरोद्भासि । लोकाह्लादी कविस्तुतः २. रायस्य
३ आकूत ।

प्रजा जना प्रजा पुत्रा आह्लादयन्तीति क्रियैका अभिन्नश्लेषः।

रायबड्गे न दृश्यन्ते श्लिष्यन्ते च पयोधरा ।
उत्तुड्गा अम्बराधारा मुक्ताफलविभूषिता ॥२५५॥

अविरुद्धक्रियाश्लेष ।

वियोग प्राप्य रायेन्द्रो मोदते हृदये परम् ।
नारीजनस्तु क्लिश्नाति पयोधरसहायक ॥२५६॥

विरुद्धक्रियाश्लेष ।

श्रीरायराज्ये काठिन्य तरुणीस्तनमण्डले ।
अपवादो निरोष्ठ्येषु काव्येषु न परत्र च ॥२५७॥

सनियमश्लेष ।

मन्दानिला लुण्टयन्ति दिव्योद्यानेपु सौरभम् ।
अथवा चञ्चरीकाश्च चोरयन्ति हि लोलुपा ॥२५८॥

नियमनिषेधश्लेष ।

रायवड्ग समुद्रश्च भूभृदास्पदगौरव ।
गम्भीरो भूरिरत्नाढ्यो लावण्याढ्यो विराजते ॥२५९॥

अविरुद्धश्लेष ।

पयोधरविलोलोऽय नृसिहश्चातकायते ।
सन्मानसगतो वड्गो राजहंसायते सदा ॥२६०॥

उपमाश्लेष ।

अर्थयोर्यत्र समयोरन्वय क्रिययाजनि ।
तन्निदर्शनमित्युक्तं सदसल्लक्ष्मगोचरम् ॥२६१॥

सुजनसुरकुजोऽय रायवड्गक्षितीशो
वितरति फलमिष्ट सर्वलोकाय लोके ।
गगनतलनिवासी कौमुदीकामिनीशो
विलसदमृतदीप्ति. कि न लोकाय धत्ते ॥२६२॥

प्रशस्तनिदर्शनालकार ।

अन्याय इति शब्दं च न वादयति बङ्गराट् ।
अपशब्द स्वशिष्यौघ न वादयति शाब्दिक ॥२६३॥

अप्रशस्तनिदर्शनालंकार ।

निन्दाव्याजेन यत्रार्थं स्तौति कश्चिच्च सा मता ।
व्याजस्तुतिर्गुणा एव दोपा इव चकासते ॥२६४॥
वक्षोरङ्गे महाश्रीर्वरमुखकमले शारदा वीरलक्ष्मी–
दोर्दण्डे रायबङ्गक्षितिप तव महाशासनाद्वर्ततेऽसौ ।
आज्ञामुल्लङ्घ्य लोके तव विशदयशस्कामिनी बम्भ्रमीति
राज्ये सेय तवाज्ञा सुकविजननुता तत्कथ जाघटीति ॥२६५॥

व्याजस्तुत्यलंकार ।

देवताधिपसस्तुत्या कीर्ति. सशोभते कथम् ।
सागरान्ता धरा कान्ता कथ जीवति राय ते ॥२६६॥

श्लिष्टव्याजस्तुति ।

व्याजस्तुतिविशेषाणामपर्यन्त. प्रविस्तर. ।
बुद्धिशालिभिरभ्युह्यस्तस्मान्नास्माभिरुच्यते ॥२६७॥
[1]इष्टाना यत्र वस्तूनामाशसनमिदं मतम् ( ? °मिदच यत्) ।
तामाशिषमलंकार वदन्ति कविकुञ्जरा. ॥२६८॥
सुरेन्द्रपूज्य परिपूर्णसौख्य.
सुज्ञानसाम्राज्यमहापदस्थ ।
जिनेन्द्रचन्द्रो वरदानरुद्र·
श्रीबङ्गराजस्य मुदेऽस्तु देव ॥२६९॥

आशीरलंकार ।

१. अष्टाना

नरेन्द्रकन्या परिपूर्णरूपा
श्रृङ्गारदुग्धाम्वुधिकौमुदी सा ।
तुङ्गस्तनी मङ्गलहारभूषा
श्रीवङ्गराजस्य मुदेऽस्तु कान्ता ॥२७०॥

इयमप्याशी ।

यत्रानेकपदार्थानामत्युत्कृष्टेतरात्मनाम् ।
एकत्र कथन जातं स समुच्चय उच्यते ॥२७१॥
[1]श्रीशान्तिनाथदेवोऽय स्याद्वादोऽमोघलाञ्छनो
धर्मश्रीरायवङ्गोऽत्र लोके रत्नानि त्रीणि वै ।
कादम्बवार्धिचन्द्रो लक्ष्मी कीर्त्यङ्गना गिरा देवी
जयकामिनी च पूज्या चत्वारि हि दिव्यवस्तूनि ॥२७२॥

अत्युत्कृष्टसमुच्चयालकार ।

रायवङ्गक्षितीशस्य सन्ति शत्रुपुरेष्वमी ।
जम्बुका घूकभल्लूका तिन्दुका युगपत्रका. ॥२७३॥

अत्यपकृष्टसमुच्चय. ।

यत्र [2]कोऽपि जनो वक्ति प्रीतियुक्तमिवाप्रियम् ।
अलंकृति ता वक्रोक्ति प्राहु. काव्यविशारदा. ॥२७४॥
श्रीवङ्गेश्वर साधु साधु भवतः श्रृङ्गारशोभा परा
मुक्ताजालमलकृत परिलसद्वज्रैश्च संभूषितम् ।
श्रीचन्द्राभरण महोदयकरं सर्वं त्वया संवृत
वस्त्रेणेति निजालयागतपतिं सा[3] वक्ति कान्ता गिरा ॥२७५॥

वक्रोक्त्यलंकार ।

---

१ श्रीशान्तिनाथ देव स्याद्वादामोघलाञ्छनो धर्मश्रो रायवङ्गभूपो रत्नानि श्रेणि लोकेऽत्र (?) । २. कोपाव्वजो ३ वानक्ति।

प्रसिद्धसाधनाद्यत्र कालत्रितयगोचरम् ।
साध्य निश्चीयते प्राज्ञैरनुमान तदुच्यते ॥२७६॥
मानसोल्लासनं दृष्टि शीला साधवगम्य सा (?) ।
कान्ता श्रीरायवङ्गस्य [1]शृङ्गाराब्धौ निमज्जति ॥२७७॥

वर्तमानसाध्यगोचरानुमानालकार ।

श्रीरायभूपदिव्याङ्गे मुक्ताजालं विलोक्य सा ।
कान्ता कुप्यति बध्नाति काञ्चीदाम्ना निजेश्वरम् ॥२७८॥

अतीतसाध्यगोचरानुमानालकार·

कादम्बवार्धिचन्द्रस्य वाग्विलासादनागतम् ।
फलं निश्चित्य सा कान्ता निजेशेऽगात् परा मुदम् ॥२७९॥

भाविसाध्यगोचरानुमानालकार: ।

यत्रासभाव्यसबन्धो वस्तुनोऽन्येन केनचित् ।
अनौचित्येन संप्रोक्तो विषमं तं प्रचक्षते ॥२८०॥

कादम्बनाथ करुणारसदुग्धवार्धि
क्वायं त्वदीयहृदये सकलप्रजासु ।
रुद्रावतार धर धीर रिपुव्रजेषु
क्वाय चकास्ति च रसो वररौद्रनामा ॥२८१॥

उत्कृष्टतान्तरं यत्र प्रकृतस्योपलक्षणम् ।
कथ्यतेऽवसर सोऽयमलकारो विबुध्यताम् ॥२८२॥
येन जिष्णुरपि ध्वस्य शत्रुर्भीमोऽपि सङ्गरे ।
तस्य श्रीरायवङ्गस्य दोर्दण्डेऽभूज्जयाङ्गना ॥२८३॥

अवसरालकार· ।

यत्र साम्य प्रतीयेत वस्तुन प्रतिवस्तुना ।
इवादीनामप्रयोगे प्रतिवस्तूपमा हि सा ॥२८४॥

---

१. शृङ्गारा " निमज्जति

कादम्बवंशे विस्तीर्णे स एको रायभूपतिः ।
अब्धौ सकलरत्नानि कौस्तुभाख्यां भजन्तु किम् ॥२८५॥

प्रतिवस्तूपमा । अस्या उपमायामन्तर्भाव इति केचित् ।

यत्सारं निश्चितं यत्र तस्मात्सारं ततोऽपि तत् ।
सारं निश्चीयते व्याप्त्या सा सारालंकृतिर्मता ॥२८६॥

कादम्बाब्धौ सुसारो वरगुणनिलयो रायबङ्गामृतांशु-
स्तस्मिन् सारा विवेकामलतरविलसत्कौमुदी लोकपूज्या ।
तस्याः संतापहृत्त्वं सुकविजननुतं सारमस्मिन् सुसारं
सत्सौख्यापादकत्वं वरविशदयशोदायकत्वं हि तस्मिन् ॥२८७॥

सारालंकारः ।

अन्यस्य वस्तुनोऽन्यस्मिन् साम्याद्वस्तुविनिश्चयः ।
स्वकारणवशाज्जातो यत्र स भ्रान्तिमान् भवेत् ॥२८८॥

संध्यारागं वनाग्निं गिरितटगतधातुव्रजं बालभानुं
कूपाराग्निं नभोऽन्तर्गतदिवि जनधीरक्तनीरेजषण्डम् ।
[1]दृष्ट्वा च बेभीयतेऽसौ सकलरिपुगणैस्त्वत्प्रतापं सुतापो
मत्वेति श्रीविलासास्पदविजयरमानर्तकीनृत्यरङ्ग[2] ॥२८९॥

भ्रान्तिमदलंकारः । मोहोपमेति केचित् ।

एतद्वेदमिदं वेति चलद्बुद्धिस्तु संशयः ।
हेतुना निश्चयो यत्र निश्चयान्तोऽपि सत्कृतः ॥२९०॥
शत्रुक्षयज्ञापकधूमकेतुः किं वैरिचन्द्रस्य विधुंतुदः किम् ।
त्वद्धस्तखड्गं कवयो विलोक्य संशेरते वीर नृसिंहभूप ॥२९१॥

संशयालंकारः ।

किं किं कराब्जनिपतन्मधुपावली भो
वीरश्रियः कविनुतावररोमराजि ।

---

१ दृष्ट्वा भीयते　२. °स्वप्रतापो सुतापो ।

त्वद्धस्तखड्गमवलोक्य कवीश्वराणां
बुद्धि स्फुरत्यमलवीरपराक्रमेश ॥२९२॥

अयमपि संशय ।

चिन्तामणि किं न जडत्वमस्य
किं वा सुरागो नहि पुण्यजालम् ।
विवेकवाक्प्रौढियुतेन तेन
त्यागेन कादम्बनृप प्रबुद्ध ॥२९३॥

निश्चयान्तसंशयालंकार । संशय. संशयोपमा, निश्चयान्तो निर्णयोपमेति केचित् ।

पूर्वपूर्वो विशिष्टोऽर्थो रच्यते तद्विशेषणम् ।
उत्तरोत्तरतन्निष्ठ यत्र संकावली मता ॥२९४॥
श्रीराय क्षितिपालको वरमहालक्ष्मीपति सा रमा
वीरश्रीसहचारिणीजयवधू. कीर्त्यङ्गना भूपिता ।
सा कीर्तिर्वरशारदासहचरी सा शारदामञ्जुल-
श्रीतुण्डाब्जनिवासिनीनुतमुखं संपूर्णसीमोपमम् ॥२९५॥

एकावल्यलंकार ।

अप्रयुज्यविशेष्य तद्विशेषणपदानि वै ।
साकूतानि प्रयुज्यन्ते यस्मिन् परिकर स हि ॥२९६॥
कुवलयकरसारं श्रीचकोरीप्रमोदं
नववररसपीयूषाश्रयं सत्कलेशम् ।
कविदिविजसहायं सर्वलोकप्रिय क
वदति निजसमान रायवङ्गप्रवीण ॥२९७॥

परिकरालंकार ।

वस्तुसाधारणं यत्र किंचिदेकत्र रूप्यते ।
निपिध्यते तदन्यत्र परिसख्या हि सा मता ॥२९८॥

कादम्बनाथसाम्राज्ये काठिन्य करपीडनम् ।
कान्तापयोधरद्वन्द्वे तत्केल्यामेव ताडनम् ॥२९९॥

परिसख्यालकार ।

याचन चुम्बनादाने बन्धन दुष्टनायके ।
वियोग पञ्जरे भीति क्रुद्धकान्तावलोकनात् ॥३००॥

इयमपि परिसख्या । सनियमश्लेष इति केचित् ।

प्रश्नोत्तरद्वय यत्र व्यक्त गूढ च वोभयम् ।
उच्येते तमलकारमाह प्रश्नोत्तराह्वयम् ॥३०१॥
प्रजाना पालन कस्मान्निवृत्ति पीडनस्य च ।
रायबङ्गमहीपालाद्दयाम्भोनिधिचन्दिरात् ॥३०२॥

व्यक्तप्रश्नोत्तरालकार ।

पयोनिधिसमानस्य रायबङ्गमहीपते ।
क्रमाब्जभासुरस्याप्यमेयस्य श्री क्व वर्तते ॥३०३॥

व्यक्तप्रश्नगूढोत्तरालकार । अस्मिन् श्लोके पादचतुष्टयस्य प्रथमाक्षरचतुष्टये गृहीते पराक्रमे इति भवति तदेव गूढोत्तरम् ।

तव सबन्धि निष्काम तव सबोधन कथम् ।
कीदृशस्त्व पुन कीदृग्मानवेश प्रपूजित ॥३०४॥

व्यक्तगूढोत्तरप्रश्नोत्तरालकार ।

अलकृतीनामुक्तानामुपमादिभिदात्मनाम् ।
मध्ये द्वयोस्त्रयाद्रीना सगो यत्र स सकर ॥३०५॥
श्रीवङ्गराज वदनं तव पूर्णचन्द्र
पादद्वय कमलयुग्ममिव प्रभाति ।
नायं भुजोऽरिनृपवृन्दसुधाशुराहु-
कीर्ति करोति सकलाम्बुधिलङ्घनं च ॥ ३०६ ॥

संकरालकार ।

सकोशमपि नीरेजं सदण्डमपि निर्जितम् ।
रायवङ्गमुखाब्जेन निष्पुण्यस्य तथा भवेत् ॥३०७॥

अयमपि संकर. ।

अलकृतीना सर्वासां गुणमुख्यव्यवस्थया ।
समकक्षतया यस्य सकरस्य द्वयी गति ॥३०८॥
अलंकृतीना संगृह्यानन्तविस्तरमप्यमूम् ।
एष मार्ग प्रमाणेन दर्शितोऽस्माभिरुत्तम ॥३०९॥
नानालंकाररत्ने विशदतररसोदारपिण्डीरडिण्डे
नानाभावोरुरङ्गत्तरलतमरसच्चारुकल्लोलमाले ।
शय्यापाकोरुवृत्तिप्रसरवहुगुणोदात्तरीत्यभ्रजाले
काव्यक्षीराम्बुराशौ जयतु तव महाकीर्तिचन्द्रो नृसिंह ॥३१०॥

इति परमजिनेन्द्रवदनचन्दिरविनिर्गतस्याद्वादचन्द्रिकाचकोरविजयकीर्ति-मुनीन्द्रचरणाब्जचञ्चरीकविजयवर्णिविरचिते श्रीवीरनरसिंह-[1]कामिरायबङ्गनरेन्द्रशरदिन्दुसनिभकीर्तिप्रकाशके शृङ्गारा-र्णवचन्द्रिकानाम्नि अलकारसंग्रहे अलकारनिर्णयो नाम नवम परिच्छेद ।

अलकारनिर्णयो नाम नवम परिच्छेद ।

■

१. काहिराय

# दोषगुणनिर्णयो नाम

## दशम. परिच्छेद.

निर्दोषधर्मं पुण्याय यथा शक्तस्तथा भुवि ।
निर्दोषकाव्य सत्कीर्त्यै वर्ज्यदोषानतो ब्रुवे ॥१॥
असमर्थ श्रुतिकटु निरर्थकमवाचकम् ।
च्युतसस्कृत्यप्रयुक्तं ग्राम्यमश्लीलकं परम् ॥२॥
नेयार्थं क्लिष्टसदिग्धे ततोऽप्यनुचितार्थकम् ।
अविमृष्टविधेयाश विरुद्धमतिकृत्तथा ॥३॥
अप्रतीतमिति प्रोक्ता पददोषा विशारदैः ।
प्रथम लक्षण तेषा कथ्यते क्रमतो मया ॥४॥
अङ्गीकृतार्थ यद्वक्तु न शक्त तत्पद तदा ।
असमर्थमिति प्रोक्त तदुदाहरण यथा ॥५॥
ग्राम भवति चैत्रोऽसौ नगर हन्ति माधव ।
दिव्यन्ति साधवो मोक्ष दयतेऽरि धराधिप ॥६॥

अत्र भवति–हन्ति–दिव्यन्ति–पदाना गत्यर्थसभवेऽपि गत्यर्थे सामर्थ्याभावात् पदत्रयसमर्थम् । दयते-पद हिंसार्थे सामर्थ्याभावादसमर्थम् ।

कठिनाक्षरसदर्भं पद श्रुतिकटूदितम् ।
सृष्ट्रा विनिर्मिते वात्र राष्ट्रे भाति पुर सदा ॥७॥

अत्र सृष्ट्रा राष्ट्रे इति पदद्वय श्रुतिकटु ।

पादपूरणमात्रार्थ यत् पद प्रतिपाद्यते ।
तन्निरर्थकमित्युक्त गुणदोषविशारदैः ॥८॥

भाति वै नगरं चात्र खलु शक्रपुरोपमम् ।
तदेव तु हि गन्तव्य त्वया सुखफलार्थिना ॥९॥

अत्र च वै [1]खलु तु हि पदानि स्वार्थानि (न) सन्तीति निरर्थकानि ।

स्वाभिप्रेत न वक्त्यर्थं प्रयुक्तमपि यत्पदम् ।
तदवाचकमित्युक्त काव्यसारविचक्षणैः ॥१०॥

रणे जयाङ्गना चैत्रो भटत्वाल्लभते पराम् ।
शूरत्वादिति हेत्वर्थे भटत्व पदमीरितम् ॥११॥

अत्र भटसामान्यवाचक भटपद शूरवाचक न भवतीत्यवाचकं ज्ञेयम् ।

शास्त्रोक्तलक्षण नास्ति यत्र तच्च्युतसस्कृति ।
भाते विधुर्नभोभागे नगरं तिष्ठते नरः ॥१२॥

अत्र भाते तिष्ठते पदयोरात्मनेपदस्य लक्षणं नास्ति । नगरमित्यधिकरणे द्वितीयाया लक्षण नास्ति ।

प्रसिद्धमपि यच्छास्त्रे कविभिर्न प्रयुज्यते ।
तदप्रयुक्त ज्ञातव्य पद दुष्ट विशारदैः ॥१३॥

अणिमादिगुणोपेतो दैवतस्तं [2]निरूपयन् ।
कविभिर्दैवत शब्द पुल्लिङ्गे न प्रयुज्यते ॥१४॥

यत्पद नोचित यत्र तत्र तद्ग्राम्यमुच्यते ।
ग्रामवर्तिजनश्लाघ्य निपुणैर्निन्द्यते यथा ॥१५॥

अधर भक्षयित्वासौ तरुण्या [3]स्तनमण्डलम् ।
हस्तेनावृत्य तद्देहे शेते कश्चिन्नरो मुदा ॥१६॥

अत्र अधरभक्षणं हस्तेन स्तनावरणं कान्ताशरीरशयनं ग्राम्यवचनम् ।

---

१ खलु मही पदाशी स्वार्था न । २ निरूपि सन् । ३ °कुण्डलम् ।

पदेन येनासभ्यार्थो ज्ञाप्यते तत्पद मतम् ।
अश्लील त्रिविध व्रीडामङ्गलार्थजुगुप्सकम् ॥१७॥

तरुण्या मदनावासो राजते सुखदायक. ।
मदनावासशब्दोऽय लज्जोत्पत्तिविधायक ॥१८॥

कामिनीवदन पद्म विनाशयति लीलया ।
विनाशयति नीरेजमेतत्पदममङ्गलम् ॥१९॥

रतौ तरुण्या नाथस्य क्षुते सति विशङ्कयते ।
क्षुते सति पद चैतज्जुगुप्साजन्मकारणम् ॥२०॥

स्वसकेतितमर्थ यत्पद मूलार्थसूचने ।
सामर्थ्यरहित वक्ति तन्नेयार्थ विदुर्बुधा ॥२१॥

अनन्तरानुजो धर्मपुत्रस्य परिपातु व ।
रुद्रकान्तेक्षुवाटेषु प्रभाते रोरवित्यलम् ॥२२॥

अत्र धर्मपुत्रस्य अनन्तरानुज भीम । भीमो नाम महेश्वर इति स्वसकेत । रुद्रकान्ता शिवा । शिवा नाम जम्बुका इति स्वसकेत. ।

अर्थं व्यवहित वक्ति तत्पद क्लिष्टमुच्यते ।
विनतानन्दनारोहकान्तापुत्रो जयत्यलम् ॥२३॥

विनतानन्दनो गरुड तदारोहको विष्णु तत्कान्ता लक्ष्मी. तत्पुत्रो मन्मथ इति व्यवहितार्थद्योतकम् ।

अर्थ विवक्षित तस्मादन्यार्थमपि यत्पदम् ।
प्रकाशयति सदिग्ध तदुक्त दोषवेदिभि ॥२४॥

देवो नभसि यातीति सदिग्ध पदमुच्यते ।
निर्जरो वा घनो वेति सशयस्य समुद्भवात् ॥२५॥

पदस्य यस्यानुचितो गम्यतेऽर्थस्तदुच्यते ।
बुधैरनुचितार्थं हि तस्योदाहरण यथा ॥२६॥

पुरुषो राजते राजसभाया वरधीवर. ।
प्रकाशयत्यनुचित कैवर्त धीवर पदम् ॥२७॥

प्राधान्येन न वर्तेत स्वार्थे यत्पदमीरितम् ।
अविमृष्टविधेयाश तत्पदं प्रणिगद्यते ॥२८॥

मार्गे याति नर कश्चिन्महाशूरो धनाधिप ।
धनाधिपमहाशूरपदे प्राधान्यतो न हि ॥२९॥

सङ्ग्रामदानप्रस्तावे महाशूरधनाधिपपदद्वयेन सार्थपरामर्शस्य प्राधान्येन सभवान्मार्गे तदसभवात् अविमृष्टविधेयाशत्वम् ।

इष्टार्थादन्यदुष्टार्थप्रतीतिजनकक्षमम् ।
विरुद्धमतिकृच्चोक्त तत्पदं विदुषा वरै· ॥३०॥

सुरतरवे लोकोऽय गुरवे तुभ्य सदा नमति ।
जननी या भवत सा परोपकारे सदा क्रमते ॥३१॥

'सुरतरवे' 'जननी या भवत' इति पदद्वय विरुद्धाऽर्थप्रतीतिकरम् । सुरतरवे सुरत-रवे 'जननी या भवत' 'जननी याभवत' ।

स्वकीयशास्त्रसिद्धार्थं यत्पद वक्ति तत्पदम् ।
अप्रतीतमिति प्रोक्त कथ्यते तदुदाहृति ॥३२॥

त्रैलोक्य वर्तते जीवमुखदु खविधायकम् ।
सृष्टिसंहारकरणे वहुधानकमुच्यते ॥३३॥

साख्यागमे त्रैलोक्यमिति वहुधानकमिति पदद्वय प्रधानतत्त्ववाचक तद् आगमप्रसिद्धत्वाद् अप्रतीतम् ।

उक्त्वा पदगतदोषान् पदैकदेशेषु पूर्वकथितास्तान् ।
दोपान् वदामि शृणु भो राय नृपाधीश भो यथायोगम् ॥३४॥

सरसत्वान्मृदुत्वाच्च सुभगत्वाच्च सुन्दरी ।
जगन्मोहकरी चित्र कामेनापि विलोक्यते ॥३५॥

अत्र पदैकदेशस्य त्वत्प्रत्ययस्य बाहुल्यात् सरसत्वादिपदत्रय श्रुतिकटूच्यते ।

आलिङ्ग्य कामुक सौख्य प्रमदाया. पयोधरान् ।
यात्योदन सूपकार. पचतेऽल [1] धरेशिने ॥३६॥

अत्र पयोधरान् इति एककान्ताया बहुवचन पदैकदेशरूपं निरर्थकम् । पचते इत्यात्मनेपदमपि पदैकदेशरूप निरर्थक फलेशत्वाभावात् ।

मा समानो न यातील साधरामृतसौष्ठवाम् ।
अत्र मासमृतेत्येतत्पदाशोऽश्लीलमुच्यते ॥३७॥

अत्र मासेति जुगुप्साकरमश्लील मृतेत्यमङ्गलमश्लीलम् ।

देवतया पूज्योऽय नरनाथो धर्मसाररसशाली ।
देवेति तयेति तथा देवतया वेति भवति सदेह. ॥३८॥

अत्र पदैकदेशरूप सदिग्धम् ।

त्यागवा कुर्वते युद्ध गीर्वाणैस्सर्वदा समम् ।
लक्षको दानशब्दस्य त्यागशब्देन वाचक ॥३९॥

अत्र त्यागवा इति पदैकदेशस्त्यागशब्द दानशब्दगमको भवति । न पुनरसुरार्थवाचक ।

पददोष निरूप्याह वाक्यदोष ब्रुवेऽधुना ।
शृणु राय महीनाथ काव्यगोष्ठिविशारद ॥४०॥

उपहतलुप्तविसर्ग हतवृत्त गर्भित तथाकीर्णम् ।
न्यूनपद कथितपद प्रसिद्धिहतमक्रम विसधि तथा ॥४१॥

प्रतिकूलवर्णमपदस्थितपदमस्थानगतसमास च ।
अधिकपदं रसरहित समाप्तपुनरात्तमनभिहितवाच्यम् ॥४२॥

---

१ दरोशिने ।

अप्रस्तुतार्थममतपरार्थमर्थान्तरैकवाचि तथा ।
भग्नप्रक्रमसभवन्मतयोगपतत्प्रकर्षयोर्युगलम् ॥४३॥
असकृद्याति विसर्गो यत्रोकार विलोप्यभाव वा ।
उपहतलुप्तविसर्गं तद्वाक्य दुष्टमिति वदन्ति बुधा ॥४४॥
नरो वरो हितोऽच्यों वा गम्भीरो दुर्लभो भुवि ।
अवरा अहिता ज्ञानहीना जीवा गृहे गृहे ॥४५॥

असकृद्विसर्गो पूर्वार्धे उकाररूप याति लोपमपरार्धे ।

यत्र च्छन्दोभङ्गो वर्णाना हीनतादितत्त्व वा ।
गुरुलघुवर्णस्थाने लघुगुरु तद्वाक्यमेव हतवृत्तम् ॥४६॥
कान्तेन नारीसमाना विदग्धा विलोकितापि प्रमद न याति ।
स्मरेण कान्ता हरिणनयना निपीड्यतेऽसौ [1]कुसुमोरुबाणैः ॥४७॥

अत्र पूर्वार्धे समानेत्यत्र माकारस्थाने लघुना भवितव्यम् । अपरार्धे हरिणनयनेत्यत्र णकारस्थाने यकारस्थाने च गुरुणा भवितव्यम् । गुरुलघोर्व्यत्ययाद्धतवृत्तम् ।

मृगाङ्ककरा शीता[2] हरन्ति तमसा ततिम् ।
वने चूतकिसलयानि वसन्ते भान्ति सर्वत ॥४८॥

अत्र पूर्वार्धे प्रथमपादे न्यूनाक्षरत्व तृतीयपादेऽधिकाक्षरत्वं हतवृत्त तत ।

आरामस्यामलदेशे नारी सकलभूरिगुणरम्या ।
संक्रीड्य पुन· क्रीडति सरोवरे विदलदखिलकमलाढ्ये ॥४९॥

अत्र प्रथमपादे गणत्रयमतिक्रम्य यति छन्दोभङ्ग । द्वितीयपादे नारीति पादमध्ये यति छन्दोभङ्ग· । ततो हतवृत्तम् ।

---

१. कुसुमोरबाणै· । २ शिता ।

छन्द शास्त्रे यति· प्रोक्तो यादृशस्तादृशस्य वै ।
यतेरभावो विद्वद्भि छन्दोभङ्गो निरूप्यते ।।५०।।

अन्यवाक्यस्य मध्येऽस्ति यत्रान्यद्वाक्यमीरितम् ।
तद्वाक्यं गर्भित प्राहु काव्यालकारकोविदा ।।५१।।

श्रृंगाररसवार्राशौ निमग्नाङ्गी विलोकते ।
रमते प्रमदारामे तरुणी निजनायकम् ।।५२।।

अत्र रमते प्रमदारामे इति वाक्यं वाक्यान्तरमध्यगतमिति गर्भितम् ।

बहुवाक्याना यत्र प्रविशन्ति पदानि मिश्रितानि मिथ· ।
तत् सकीर्णं कथित क्लिष्ट पुनरेकपदवाक्यवृत्ति ।।५३।।
कुप्यति रमणो नारी नमति रुष च चरणपङ्कजे त्यजति ।
परिरभ्य मोदतेऽसौ चुम्बति मज्जति वरार्णवे सौख्ये ।।५४।।

अत्र नारी कुप्यति रमणश्चरणपङ्कजे नमति। नारी रुष त्यजति रमण परिरभ्य चुम्बति वरासौ मोदते रमण. सौख्येऽर्णवे मज्जतीति बहूना वाक्याना पदानि परस्परमिश्रितानि इति सकीर्णम् । एक-वाक्यगतपदानि मिथो मिश्रितानि चेत् क्लिष्ट वाक्य ज्ञेयम् ।

पदेन येन यद्वाक्य विना न्यून भवेद्यदा ।
तदन्यूनपदमित्युक्त तस्य लक्ष्य प्ररूप्यते ।।५५।।
रतिक्रियार्थी रमणी जगन्मोहनरूपिणीम् ।
विलोक्यालिङ्गय सौख्याब्धौ निमज्जति मनोहरे ।।५६।।

अत्र नायक इति विशेष्यपदाभावाद् न्यूनपदवाक्यम् ।

पदस्य कथन यत्र कथितस्य पुनर्यदा ।
तदा सद्भिस्तु कथितपद तद्वाक्यमुच्यते ।।५७।।

स्मरकेलिविनोदेन कान्ता कान्तस्य ताडनम् ।
करोति केलिनीलाब्जकर्णपूरेण चारुणा ।।५८।।

अत्र केलीति प्रागुक्त पुनरपि केलीति कथितं तत. कथितपदं वाक्यम् ।

प्रसिद्धिरहित यत्र पदमुक्त तदुच्यते ।
प्रसिद्धिहतमेतद्धि वाक्य दुष्ट विचक्षणै ॥५९॥

पद्माकरे सरोजाक्षी केका हसा विकुर्वते ।
ता निशम्य मम स्वान्त विभेति मदनातुरम् ॥६०॥

अत्र केकाशब्दो मयूरवाण्या प्रसिद्धो न हसध्वनौ इति प्रसिद्धिहतं वाक्यम् ।

लोकशास्त्रक्रमो नास्ति यत्र तद्वाक्यमक्रमम् ।
तदुदाहरणं वक्ष्ये तद्वाक्यप्रतिपत्तये ॥६१॥

उद्यानकैरवाम्भोजवृद्धीना हेतवो मताः ।
दिवाकरवसन्ताब्जा मोदयन्तु सतां मन. ॥ ६२ ॥

अत्र कमलारामकैरवाणां वृद्धिहेतुत्वे भानुवसन्तचन्द्राणा वाच्ये व्यत्ययकरणादक्रमं वाक्यम् ।

योगसौगतसाख्याना मते देवा. प्ररूपिता. ।
कपिलेश्वरबुद्धास्तु क्षणिकेतरवादिन. ॥६३॥

अत्र स्पष्टमुदाहरणम् ।

यत्र वाक्ये विरूपत्वं विश्लेषोऽश्लीलता तथा ।
कष्टता सधिदोषा स्यु विसंधि तदनुस्मृतम् ॥६४॥

वने आस्ते वरा नारी तद्दृष्टी अतिचञ्चले ।
तदूरू अधिकौ भातस्तज्जङ्घे अतिमोहने ॥६५॥

अत्र प्राप्तेऽपि सधौ सकृदविहिते सति, निषिद्धेऽपि संधौ तथैव असकृद्विहिते सति वैरूप्य दोषः, ततो विसंधि वाक्यम् ।

ईश आगत उदात्तसपदा भूषितो[1] रमणि पश्य पश्य ते ।
एप ऊर्जितगुणस्तवाधुना कामसौख्यममित करोत्यलम् ॥६६॥

अत्र निपिद्धे सन्धौ तथैवासकृद्विहिते सति विश्लेपो दोष । ततोऽपि विसन्धि वाक्यम् ।

सुभगेशं निजं नारी विलोक्य परिरभ्य चुम्बति प्रमदम् ।
अरुणामृत अमृताभं (अधरामृतममृताभं) पाय पायं रसाब्धि-
मग्नाभूत् ॥६७॥

अत्र सुभगेशमिति सुभगमीशं सुष्ठु भगेशमिति व्रीडाकरमश्लीलं सधिकरण ततोऽपि विसधि वाक्यम् ।

गुर्वालोकनपात्रचार्वमलं पूर्वपूर्वसौन्दर्यम् ।
ऊर्वङ्गजगजनिगडं चित्रमिद भाति कामिनीरूपम् ॥६८॥

अत्र बहुकृत्व श्लिष्टतया संधेर्दोष कष्टत्वमुच्यते । ततोऽपि विसधि वाक्यम् ।

रसानुकूलवर्णातिरिक्त यद्वाक्यमुच्यते ।
तदुक्त प्रतिकूलादिवर्णं काव्यविचक्षणै ॥६९॥

शठेन दृढमालिङ्ग्य नाथेन कठिनस्तनौ ।
कम्बुकण्ठ्या मन खेदं विभिद्याप्त स्थिर सुखम् ॥७०॥

अत्र श्रृंगाररसे कठिनाना ठादिवर्णानामनुकूलता नास्तीति प्रतिकूलवर्णं वाक्यम् ।

यत्रास्थाने पद वृत्त तद्वाक्य दीर्घदर्शिभि. ।
अस्थानस्थपद प्रोक्त तस्य लक्ष्य निरूप्यते ॥७१॥

तन्वङ्गीतनुमालोक्य सोत्कण्ठो नायको मुदम् ।
परमा याति लावण्यवार्धिचन्द्रकलोपमाम् ॥७२॥

---

१ रमणी ।

अत्र लावण्येत्यादिपदं सोत्कण्ठ इत्यादिपदेभ्य पूर्वं वाच्यम् । तस्मादस्थानस्थपदवाक्यम् ।

यत्र वाक्ये समासोऽयमस्थाने वर्तते यदा ।
अस्थानस्थसमास तद्वाक्यमुक्त तदा बुधै ॥७३॥
अस्मिन् लोके तमो व्याप्तमिति क्रोधादिवारुण ।
भाति पूर्वाचलाग्रस्थतीव्रलोहितमङ्गल: ॥७४॥

अत्र रौद्ररसस्थाने समासबाहुल्यस्यौजोगुणस्य प्रस्तुतत्वात्समास: कर्तव्य । अस्थाने कविवचने न कर्तव्य' समास । आदित्यस्य रौद्ररसाभावाद् अस्थानस्थसमासं वाक्यम् ।

विनापि पदेन येनेद वाक्यं संपूर्णता गतम् ।
तेनाधिकपदमुक्त वाक्य दुष्टं विचक्षणै ॥७५॥
चन्द्राकारसमा कीर्तिर्भानुबिम्बसमं परम् ।
तेजो विभाति भूपस्य पूर्वपुण्यविपाकत ॥७६॥

अत्र आकारपदेन विम्बपदेन च विनापि वाक्य पूर्णं भवतीत्यधिकपदं वाक्यम् ।

यत्र वाक्ये रसो नास्ति तद्वाक्य रसविच्युतम् ।
उच्यते कविभिस्तस्य दृष्टान्त: कथ्यतेऽधुना ॥७७॥
द्विहस्त एककण्ठोऽयं सपादयुगलो नर ।
डित्थस्य पुत्रो वस्त्रेण युक्तो ग्रामाय गच्छति ॥७८॥

अत्र वाक्यस्य नीरसत्वाज्जातिरप्यलंकारो नास्तीति रसच्युतं वाक्यम् ।

समाप्तपुनरात्त तद्यस्य यत्समाप्य पुन. स्मृतम् ।
वाक्यमुक्त तथा तस्य लक्ष्यरूप निगद्यते ॥७९॥
स्मरेपुच्चन्द्रिका तस्या लीलालोलावलोकनम् ।
तनोतु भवत' प्रीतिं नीलनीरेजमालिका ॥८०॥

अत्र पादत्रये वाक्यं समाप्तं कृत्वा नीलनीरेजमालिकेति पुनः स्वीकृतमिति समाप्तपुनरात्त वाक्यम् ।

वक्तव्यमेव न प्रोक्त यत्र वाक्ये तदुच्यते ।
अनुक्तवाच्यमेतद्धि वाक्य दुष्ट विशारदै ॥८१॥

लीलावलोकनात्तन्वि तव मज्जीवसपदा ।
जायते किं निमित्त त्व मा न पश्यसि सेवकम् ॥८२॥

अत्र तव लीलावलोकनादेवेत्येवकारपद नियमेन वाच्य तत्पदं नोक्तमित्यनभिहितवाच्य वाक्यम् ।

अप्रस्तुतस्तुति यत्र वक्ति तद्वाक्यमुत्तमै ।
अप्रस्तुतार्थमित्युक्त तस्य लक्ष्य प्रदर्श्यते ॥८३॥

दीर्घदेहो रक्तवर्णो विशालाक्षो धनाधिप ।
रम्भास्तम्भसमानोरु. कवीशो वर्तते भुवि ॥८४॥

अत्र दीर्घदेहादिविशेषण कवीन्द्रस्य श्लाघनोपयोगि न स्यादित्यप्रस्तुतार्थ वाक्यम् ।

प्रस्तुतस्य विरुद्धार्थ कथ्यते यत्र तन्मतम् ।
असमतपदार्थ तु वाक्य तत्त्वविदा सताम् ॥८५॥

रणादम्बरमालोक्य बहुभीतो भटाग्रणी ।
जित्वा शत्रु समालिङ्ग्य वीरलक्ष्मी प्रमोदते ॥८६॥

अत्र प्रस्तुतस्य भयानकरसस्य विरुद्धो वीररस कथित इत्यमतपदार्थवाक्यम् ।

अपरार्धगत यत्र वाचक त्वेकमुच्यते ।
तद्वाक्यमुक्तमर्थान्तरैकवाचकमीदृशम् ॥८७॥

स्मराग्निपीडिते[1] तन्वि स्मर [2]क्रूरोऽमर श्रय ।
तस्मादिति प्रिया दूत्या वाणी प्रोक्ता हिता मिता ॥८८॥

---

१ °पीडिता । २ क्रूरोरम ।

अत्र पूर्वं चन्द्रिकादिकमनादृत्य पुनश्चन्द्रिका श्लाघ्यते ।

निर्ल्लंजपुरुषेणार्थो श्रव्य सद्भि प्ररूपित ।
य· स ग्राम्यो मतो लोके तदुदाहृतिरुच्यते ॥१०९॥

ऊरुमूल सुधाकल्पं शृंगाररसमन्दिरम् ।
कान्ताजनाना चुम्बित्वा कृतार्थोऽयं भवाम्यहम् ॥११०॥

अत्र ग्राम्यत्व प्रसिद्धम् ।

क्रमेण वाच्यौ यावर्थौ तयोर्व्यत्ययकीर्तनम् ।
दुष्क्रम· कथित· सद्भिरस्योदाहरण यथा ॥१११॥

जगत्तमो हृतं सर्व किरणेन स चांशुना (सुधांशुना) ।
दिवाकरेण वा स्वीयैरंशुभि पाटवावहै ॥११२॥

अत्र पक्षान्तरस्वीकारे दिवाकरेणेति पूर्व वक्तव्यम् ।

श्लाघ्यस्य वस्तुजातस्य वैयर्थ्यप्रतिपादनम् ।
व्यर्थीकृत इति ज्ञेय (ज्ञेय ) तस्य लक्ष्य प्रकाश्यते ॥११३॥
जगत्तापहरश्चन्द्रस्तमोहारी दिवाकर ।
आह्लादिनी[1] सुधा चात किमत किमत· फलम् ॥११४॥

अत्र श्लाघ्याना चन्द्रादीना व्यर्थत्वादाह्लादन व्यर्थीकृत उच्यते ।

हेतोर्विना कार्यमुक्त यत्र सोऽर्थोऽभिऽधीयते ।
अहेतुक पुन तस्य दृष्टान्तकथन यथा ॥११५॥
यो वातदेही तेनेद हिमाम्बुहरिचन्दनम् ।
त्यक्त विलोक्य चैत्रोऽपि तादृशं वस्तु मुञ्चति ॥११६॥

अत्र हरिचन्दनादिवस्तुत्यागे वातदेहिनो वात· कारणम् । चैत्रस्यापि तत्त्यागे हेतुर्नास्ति ।

---

१ सुधात किं किमत ।

